ण्यो: प्राणाः । प्राणा दीक्षा । प्राणैरेव प्राणान्दीक्षामवरुन्धे ॥ ३८ ॥ [2]एकविꣳशतिं वैश्वदेवानि जुहोति । एकविꣳशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य

---

आत्मनः पुरुषसकाशात् उदक्रामन् आत्मानं हित्वा गताः । अथ सा दीक्षा अभवत् ता देवता दीक्षात्वेन परिणता अभूवन् । वक्ष्यति च—'प्राणा दीक्षा' इति । अथ स उत्क्रान्तप्राणः प्रजापतिः एतानि वैश्वदेवानि 'स्वाहाऽऽधिमाधीताय'* इत्यादीनि जुहोति । एतद्व्रतम् । दीक्षामवरुन्धे इति । तस्याः प्राणरूपत्वात् प्राणानप्यवरुन्धे इत्यर्थाद्गम्यते । सप्त जुहोति। सप्तधा एकविंशतिं वैश्वदेवानि विभज्य त्रीणित्रीणि जुहोति । अन्वहं दिनेदिने प्राणानामुत्क्रान्तानां प्रीणनं कृतं भवत्यन्वहं होमात्, दिनेदिने दीक्षाऽवरुद्धा भवति । संवत्सरस्यास्य तु या उत्तमा अमावास्या विधेया तस्यां इह दीक्षणीयां त्रैधातवीयां प्रवदन्ति । सप्तदिनानि दीक्षाहुतयः, तदेव त्रीण्पीति । 'स्वाहाऽऽधिमाधीताय'* इत्यादीनि त्रीणि वैश्वदेवानि । 'आकूत्यै प्रयुजे'† इत्यादीनि चत्वार्यौद्ग्रहणानि ॥

[2]एकविंशतिमिति ॥ दिनेदिने त्रीणित्रीणि । देवानां भोगाधारत्वात् मासादीनां देवलोकत्वम् । एकविंश इति । योऽयमेकविंश आदित्यः एष सुवर्गो लोकः एष एव तदैक्यं देव-

---

*सं. ७-१-१९. †सं. १-२-५.

एंकवि॒ꣳश॒ः । ए॒ष सु॑व॒र्गो लो॒कः । तद्दै॒व्यं॑ क्ष॒त्रम् । सा श्रीः । तद्ब्र॒ध्नस्यं वि॒ष्टप॑म् । तथ्स्वारा॑ज्यमु॒च्य॑ते ॥ ३१ ॥ [3]त्रि॒ꣳश॒तमौ॒द्ग्र॒ह॒णानि॑ जु॒होति । त्रि॒ꣳश॒द॑क्षरा वि॒राट् । अन्नं॑ वि॒राट् । वि॒रा॒जै॒वान्ना॒द्य॑मव॑रुन्धे । [4]त्रे॒धा वि॒भज्यं दे॒वता॑ जु॒होति । त्र्या॑वृ-

संबन्धि क्षत्रं बलं, एतदधीनत्वात्तस्य । एष एव सा श्रीः दैवी विभूतिः । एष एव तद्ब्रध्नस्य लोकस्य स्वर्गस्यापि विष्टपं उच्छ्रितस्थानं, यत्र स्वर्गोऽपि विष्टब्धः । एष एव हि तत्स्वाराज्यं अपवर्ग इत्युच्यते, स्वातन्त्र्यैकरसं पदं यदाहुर्वेदाः ॥

[3]त्रिशतमिति ॥ 'तं वैश्वदेवान्येवोदयच्छन्'* इति वक्ष्यमाणत्वात् वैश्वदेवानामप्युद्ग्रहणत्वम् । उद्ग्रहणार्थान्यौद्ग्रहणानि । 'स्वाहाऽऽधिम्' इत्यादीनि एकविंशतिः । तथा आकूत्यादीनि चत्वार्यौद्ग्रहणानि तत्स्था अपि नव देवता अभेदेनोच्यन्ते । यथा— अग्निरेकस्सर्वेषु, अकूत्यादिचतुर्षु द्वेद्वे, तथा चाष्टौ । एवं त्रिंशदौद्ग्रहणदेवताभिधानान्यौद्ग्रहणानि । केचिदाहुः—एकविंशतिः वैश्वदेवानि, अग्नेर्दीक्षाः सप्त, एका ऋतुदीक्षा, एका पूर्णाहुतिरिति । प्राकृतौद्ग्रहणव्यतिरिक्तानि त्रिंशदिति । परे पुनराहुः— 'वाचा मे वाग्दीक्षतां स्वाहा'‡ इत्यादीनि पञ्च, आकूत्यादीनि चत्वारि, वैश्वदेवानि एकविंशतिरिति । त्रिंशदक्षरेत्यादि गतम् ॥

[4]त्रेधेति ॥ वैश्वदेवेषु एकैकां देवतां प्रजापतिप्रभृतिकां त्रेधा

*ब्रा. १-८-११. †सं. ७-३-१९. ‡आप. श्रौ. सू.

तो वै देवाः । त्र्यांवृत इमे लोकाः । एषां लोकानामाप्त्यै । एषां लोकानां क्लृप्त्यै । [5]अप वा एतस्मात्प्राणाः क्रामन्ति ॥ ४० ॥ यो दीक्षामतिरेचयति । सप्ताहं प्रचरन्ति । सप्त वै शीर्षण्याः प्राणाः । प्राणा दीक्षा । प्राणैरेव प्राणान्दीक्षामवरुन्धे । [6]पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णाहुतिः । सर्वमेवाप्नोति । अथो इयं वै पूर्णाहुतिः । अस्यामेव प्रतितिष्ठति ॥ ४१ ॥

रुन्धे प्राणान्दीक्षामवरुन्ध उच्यते
क्रामन्ति तिष्ठति ॥१०॥

त्रिप्रकारविशिष्टां विभज्य जुहोति । त्र्यावृतः त्रिधा आवृतः द्युपृथिव्यन्तरिक्षस्था देवा एकादश । एकादश लोकाश्च त्र्यावृताः त्रिप्रकारवृत्तयः । आप्तिः लाभः, क्लृप्तिः अविपर्यस्तधर्मता॥

[5]अप वा इत्यादि॥ दीक्षां दीक्षणीयां योऽतिरेचयति वर्धयति सामर्थ्यात् सप्ताहातिरेको निन्द्यते। तस्मात् सप्ताहमेव प्रचरन्ति ॥

[6]पूर्णाहुतिः—सर्वं वा इत्यादि ॥ वैश्वदेवानन्तर्भावात् पुनर्वचनम् । सर्वमिति । सर्वाभिमतहेतुत्वात् ताच्छब्द्यम् । अथो अपि च इयं पृथिव्येव पूर्णाहुतिः सर्वाभिमतहेतुत्वसाम्यात् ॥

इति तैत्तिरीयब्राह्मणे तृतीये अष्टके अष्टमे प्रपाठके
अश्वमेधे प्रथमे दशमोऽनुवाकः.

[1]प्रजापतिरश्वमेधमसृजत। तꣳ सृष्टं न किंचनोदयच्छत् । तं वैश्वदेवान्येवोदयच्छन् । यद्वैश्वदेवानि जुहोति । यज्ञस्योद्यत्यै । स्वाहाऽऽधिमाधीताय स्वाहा । स्वाहाऽऽधीतं मनसे स्वाहा । स्वाहा मनः प्रजापतये स्वाहा । काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहेति प्राजापत्ये मुख्ये भवतः । प्रजापतिमुखाभिरेवैनं देवताभिरुद्यच्छते ॥ ४२ ॥ [2]अदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सुमृडीकायै स्वाहेत्याह । इयं वा अदितिः। अस्या एवैनं प्रतिष्ठायोद्यच्छते । [3]सरस्वत्यै स्वाहा सर-

[1]प्रजापतिरश्वमेधमित्यादि ॥ उद्यमनं सृष्टस्योद्धारणम् । वैश्वदेवान्येव तं सृष्टं अश्वमेधं उद्यन्तुं अशक्नुवन्, नान्यत्किञ्चन । यदित्यादि गतम् । प्राजापत्ये प्रजापतिदेवत्ये द्वे त्रिके मुख्ये मुखभवे भवतः । तत्र मन्त्रेष्वाम्नाते अपि पठित्वैवं दर्शयति त्रिकाणि । तत्राधीतादिभिः षड्भिः पदैः अवस्थाभेदेन प्रजापति रेवोच्यते । तेन प्रजापतिमुखाभि प्रजापतिप्रभृतिभिः देवताभिः अश्वमेधं उद्यच्छते उद्धृतसामर्थ्यमारभते ॥

[2]अस्या एवेति ॥ प्रतिष्ठाय प्रतिष्ठालाभेन अस्याः पृथिव्याः एनं* अश्वमेधं उद्यच्छते ॥

[3]वाग्वा इत्यादि ॥ गतम् ॥

* "अस्यां पृथिव्यामेनं" इति पाठान्तरम्.

स्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहे-
त्याह । वाग्वै सरस्वती । वाचैवैनमुद्यच्छते । [4]पू-
ष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धि-
षाय स्वाहेत्याह । पशवो वै पूषा । पशुभिरेवैन-
मुद्यच्छते । [5]त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय स्वाहा
त्वष्ट्रे पुरुरूपाय स्वाहेत्याह । त्वष्टा वै पशूनां मि-
थुनानाꣳ रूपकृत् । रूपमेव पशुषु दधाति । अथो
रूपैरेवैनमुद्यच्छते । [6]विष्णवे स्वाहा विष्णवे नि-
खुर्यपाय स्वाहा विष्णवे निभूयपाय स्वाहेत्याह ।
यज्ञो वै विष्णुः । यज्ञायैवैनमुद्यच्छते । [7]पूर्णाहु-
तिमुत्तमां जुहोति । प्रत्युत्तब्ध्यै सयत्वाय ॥ ४३ ॥

यच्छते पुरुरूपाय स्वाहेत्याहाष्टौ च ॥ ११ ॥

[4]पशवो वै पूषेति ॥ तत्सिद्धिहेतुत्वात् ॥

[5]रूपैरिति ॥ प्रशस्ता गुणा रूपाणि ॥

[6]यज्ञो वा इति ॥ सर्वयज्ञाधारत्वात् ताच्छब्द्यम् । यज्ञाय सर्वयज्ञाधाराय यज्ञं इष्टं प्राप्तुं अश्वमेधं उद्यच्छते ॥

[7]पूर्णाहुतिः उत्तमा उद्यतस्य यज्ञस्य प्रत्युत्तब्ध्यै प्रत्युत्तम्भनाय भवति, सयत्वाय च भवति । षिञ् बन्धने । उत्तम्भनदण्डाग्रं सयः येन गृहीतमाधेयं न पतति ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके अष्टमप्रपाठके एकादशोऽनुवाकः.

सा॒वि॒त्रम॒ष्टाक॑पालं॒ प्रा॒तर्निर्व॑पति । अ॒ष्टाक्ष॑रा गाय॒त्री । गा॒य॒त्रं प्रा॑तस्सव॒नम् । प्रा॒त॒स्स॒वना॑दे॒वैनं॑ गायत्रि॒याश्छन्द॒सोऽधि॒ निर्मि॑मीते । अथो॑ प्रातस्स-व॒नमे॒व तेना॑प्नोति । गा॒य॒त्रीं छन्दः॑ । [2]स॒वि॒त्रे प्र॑-स॒वि॒त्र एका॑दशाकपालं म॒ध्यन्दि॑ने । एका॑दशाक्षरा त्रि॒ष्टुप् । त्रैष्टु॑भं॒ माध्यंदिन॒ꣳ सव॑नम् । माध्य॑न्दि-नाद॒वैन॒ꣳ सव॑नात्त्रि॒ष्टुभ॒श्छन्द॒सोऽधि॒ निर्मि॑मीते ॥ ४४ ॥ अथो॒ माध्य॑न्दिनमे॒व सव॑नं॒ तेना॑प्नोति । त्रि-ष्टुभं॒ छन्दः॑ । स॒वि॒त्र आ॑सवि॒त्रे द्वाद॑शकपालमप-रा॒ह्णे । द्वाद॑शाक्षरा॒ जग॑ती । जाग॑तं तृतीयसव॒नम् । तृ॒ती॒य॒स॒व॒नादे॒वैन॒ं जग॑त्या॒श्छन्द॒सोऽधि॒ निर्मि॑मीते ।

[1]सावित्रमित्यादि ॥ यस्मिन् अहनि रत्निभ्योऽश्वपरिदानं तत उत्तरेद्युः तृतीयायां वा प्रातः सवित्रे अष्टाकपालं नि-र्वपति । अष्टाक्षरेति । अष्टत्वान्वयेन प्रातस्सवनात् गायत्र्याः छन्दसः एनं अश्वमेधं अधिकगुणं निर्मिमीते उत्पादयति । अपि च तेन अष्टाकपालेन प्रातस्सवनं गायत्रीं छन्दः आप्नोति ॥

[2]अथ तस्मिन्नेवाह्नि मध्यंदिने सवित्रे प्रसवित्रे एकाद-शकपालं निर्वपेत । गतमन्यत् । अथ अपराह्णे सावित्र आसवित्रे द्वादशकपालं निर्वपेत् । गतमन्यत् । त्रिष्टुब्जगतीशब्दौ उत्सादी ॥

अथो तृतीयसवनमेव तेनाप्नोति । जगती छन्दः । [3]ईश्वरो वा अश्वः प्रमुक्तः परां परावतं गन्तोः । इह धृतिस्स्वाहेह विधृतिस्स्वाहेह रन्तिस्स्वाहेह रमतिस्स्वाहेति चतस्र आहुतीर्जुहोति ॥४५॥ चतस्रो दिशः । दिग्भिरेवैनं परिगृह्णाति । [4]आश्वत्थो व्रजो भवति । प्रजापतिर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवथ्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् । यदाश्वत्थो व्रजो भवति । स्व एवैनं योनौ प्रतिष्ठापयति ॥ ४६ ॥

त्रिष्टुभश्छन्दसोऽधि निर्मिमीते जुहोति नव च ॥ १२ ॥

---

[3]ईश्वर इति ॥ सायमपि चतुर्षु पत्सु एताः धृतीः जुहोति। दिग्भिरिति। चतुष्ट्वान्वयात् चतसृभिः दिग्भिरेवाश्वं परिगृहीतो भवति॥

[4]आश्वत्थ इति ॥ अश्वत्थनिर्मिता अश्वशाला अश्वत्थफलका स्मृता । 'अनुदात्तादेश्च' इत्यञ् । प्रजापतिरित्यादि । निलायत निरगच्छत, अश्वो भूत्वा रूपं च तदीयं कृत्वा । 'उपसर्गस्यायतौ' इति लत्वम् । सोऽश्वत्थ इत्यादि । गतम्* ॥

इति तृतीये अष्टमे अश्वमेधे द्वादशोऽनुवाकः.

---

* आ. १-१-१.

[1]आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह । ब्राह्मण एव ब्रह्मवर्चसं दधाति । तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत । [2]आऽस्मिन्राष्ट्रे राजन्य इषव्यश्शूरो महारथो जायतामित्याह । राजन्य एव शौर्यं महिमानं दधाति । तस्मात्पुरा राजन्य इषव्यश्शूरो महारथोऽजायत । [3]दोग्ध्री धेनुरित्याह । धेन्वामेव पयो दधाति । तस्मात्पुरा दोग्ध्री धेनुरजायत । वोढाऽनड्वानित्याह ॥ ४७ ॥ अनडुह्येव वीर्यं दधाति । तस्मात्पुरा वोढाऽनड्वानजायत । आशुस्सप्तिरित्याह । अश्व एव जवं दधाति । तस्मात्पुराऽऽशुरश्वोऽजायत । पुरंधिर्योषेत्याह । योषित्येव रूपं दधा-

---

[1]आब्रह्मन्निति जातमुख्यमुपतिष्ठते, तस्येदं ब्राह्मणम् । नाद्यैव ब्राह्मणो ब्रह्मवर्चसी, अपि तु पुराऽपीत्यर्थः । ब्राह्मणस्य ब्रह्मवर्चसित्वं अनादीति यावत् ॥

[2]इषव्यः इषुषु साधुः । शूरः विक्रान्तः । महारथः रथचर्याकुशलः ॥

[3]दोग्ध्री बहुक्षीरा । साधुकारिणि तृन् । वोढा साधुवाही । आशुः वेगवान् । रूपमिति । पुरं रमणीयं शरीरं धीयतेऽस्यामिति पुरंधिः । 'कर्मण्यधिकरणे च' इति क्तिन् । तस्मात् युवतिः स्त्री रूपवत्त्वात् सर्वस्य प्रिया प्रीणयित्री भावुका भव-

ति । तस्माथूर्णी युवतिः प्रिया भावुका । जिष्णू रथेष्ठा इत्याह । आह वै तत्र जिष्णू रथेष्ठा जायते॥ ४८॥ यत्रैतेन यज्ञेन यजन्ते। [4]सभेयो युवेत्याह। यो वै पूर्ववयसी । स सभेयो युवा । तस्माद्युवा पुमान्प्रियो भावुकः । आऽस्य यजमानस्य वीरो जायतामित्याह । आह वै तत्र यजमानस्य वीरो जायते । यत्रैतेन यज्ञेन यजन्ते । [5]निकामे निकामे नः पर्जन्यो वर्षत्वित्याह । निकामे निकामे ह वै

---

नशीला । जिष्णुः जयशीलः । रथेष्ठाः रथस्थाता । आजायते सर्वत्र जायते । यत्र एतेन अश्वमेधेन यजन्ते। 'सुपि स्थः' इति कः, 'तत्पुरुषे कृति बहुलम्' इत्यलुक् ॥

[4]पूर्ववयसीति ॥ मिश्रयितृवाचित्वमप्यस्यास्तीति तं निराकरोति—पूर्वं प्रथमं वयः यस्यास्ति स पूर्ववयसी । स खलु सभेयः सभायां साधुः युवा, स्थविरं हि सभासु नाद्रियन्ते । पूर्वं वयः पूर्ववयसम् । 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः । 'अत इनिठनौ, 'ढश्छन्दसि' इति सभाशब्दात् ढः । तस्मात् युवा पुमान् सभेयत्वात् प्रियः भावुकः । गतमन्यत् ॥

[5]निकामः प्रार्थना । 'अनुदात्तं च' इति द्वितीयस्यानुदात्तत्वम्, ताथादिना पूर्वस्यान्तोदात्तत्वम् । फलिन्यः प्रभूतफलाः पच्यन्ते । कर्मकर्तरि यक् । योगसहितः क्षेमः योगक्षेमः,

तत्र पर्जन्यो वर्षति । यत्रैतेनं यज्ञेन यजन्ते । फ-
लिन्यो न ओषधयः पच्यन्तामित्याह । फलिन्यो
ह वै तत्रौषधयः पच्यन्ते । यत्रैतेनं यज्ञेन यजन्ते।
योगक्षेमो नः कल्पतामित्याह । कल्पते ह वै तत्र
प्रजाभ्यो योगक्षेमः । यत्रैतेनं यज्ञेन यजन्ते॥४१

अनड्वानित्याह जायते वर्षति सप्त च ॥१३॥

[1]प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशत् । स आत्म-
न्नश्वमेधमधत्त । तं देवा अब्रुवन् । एष वाव य-

शाकपार्थिवादित्वात् उत्तरपदलोपी समासः । अलब्धस्य लाभो योगः, लब्धस्य परिपालनं क्षेमः ॥

इति तृतीये अष्टमे त्रयोदशोऽनुवाकः.

[1]प्रजापतिर्देवेभ्य इत्यादि ॥*

पत्नी संयाजनान्तेऽहन्यग्निष्टोमे तु संस्थिते ।
प्रजापतिसमे गीतवीणागणकिभिर्नृपे ॥

*आ ॥ पुस्तके अधिकः पाठः—

"सप्तसु दीक्षादिवसेष्वतीतेषु अष्टमेऽहनि प्रायणीयायातिथ्येष्टिपर्यन्तः प्रयोगस्समः । तानूनप्त्रस्पर्शानन्तरं प्रवर्ग्यसंभारादिद्वादशोपसदः त्रिरात्रसाध्याश्वमेधस्य प........मत्वादहीनत्वाच । 'द्वादशाहीने सौम उपैति' इत्युपसदो 'द्वाद-

ज्ञः । यदश्वमेधः । अप्येव नोत्रास्त्विति । तेभ्य एतानन्नहोमान्प्रायच्छत् । तानजुहोत् । तैर्वै स देवानप्रीणात् । यदन्नहोमाञ्जुहोति ॥ ५० ॥ देवानेव

---

अस्तंगते सहस्रांशौ वारुण्या स्वर्थनिर्मिताः ।
षट्त्रिंशतमथासन्दीस्तावन्तोऽध्वर्यवो वृताः ॥
अमाकृताः स्रुवैर्दीर्घदण्डैः खदिरसम्भवैः ।
सर्वां तां रात्रिमन्नानि दशाज्यादीनि जुह्वति ॥

इदमिदानीं विदधाति । अश्वमेधव्यतिरिक्तान् यज्ञान् व्यादिश्य पृथक्पृथक् विभज्य अश्वमेधं आत्मन्येव स्थापितवान् । अथ तं देवा अब्रुवन् एषः अश्वमेधः एव यज्ञः अन्ये यज्ञाभासाः। तस्मात् अस्मिन् यज्ञे अस्माकं यत्किंचिदप्यस्त्वेव अल्पमस्त्विति यावत् । अस्माकमप्यस्त्विति वा तेभ्यः एतान् अन्नहोमान् वक्ष्यमाणान् 'एकस्मै स्वाहा'* इत्यादीन् प्रादात् । तेभ्यश्च ताननजुहोत् तैश्च तानप्रीणयत् । यदित्यादि । गतम् । अदनीयानि होतव्यानि अन्नहोमाः ॥

---

शाहीनस्य यज्ञस्य सवीर्यत्वाय' इति 'मध्यमे प्रवर्ग्योपसदावन्तरावेदिकरणं द्विस्तावा वेदिर्भवतीत्यश्वमेधे विज्ञायते' इति सूत्रानुरोधेन ततः प्रवर्ग्योद्वासनानन्तरमग्नीषोमीयपशुतन्त्रं तस्मिन् दिन एव । ततस्तस्यामेव रात्रौ महारात्रे बुध्येत्वाग्निष्टोमारम्भ पत्नीसंयाजान्तः संतिष्ठते । तस्यामेव रात्रौ कर्तव्यं विशेषमाह—"

* ब्रा. ३-८-१७, १९.

तैर्यजमानः प्रीणाति । [१]आज्येन जुहोति । अग्नेर्वा एतद्रूपम् । यदाज्यम् । यदाज्येन जुहोति । अग्निमेव तत्प्रीणाति । मधुना जुहोति । महत्यै वा एतद्देवतायै रूपम् । यन्मधु । यन्मधुना जुहोति ॥ महतीमेव तद्देवतां प्रीणाति । तण्डुलैर्जुहोति । वसूनां वा एतद्रूपम् । यत्तण्डुलाः । यत्तण्डुलैर्जुहोति । वसूनेव तत्प्रीणाति । पृथुकैर्जुहोति । रुद्राणां वा एतद्रूपम् । यत्पृथुकाः । यत्पृथुकैर्जुहोति ॥ ५२ ॥ रुद्रानेव तत्प्रीणाति । लाजैर्जुहोति । आदित्यानां वा एतद्रूपम् । यल्लाजाः । यल्लाजैर्जुहोति । आदित्यानेव तत्प्रीणाति । करम्भैर्जुहोति । विश्वेषां वा एतद्देवानाꣳ रूपम् । यत्करम्भाः । यत्करम्भैर्जुहोति ॥ ५३ ॥ विश्वानेव तद्देवान्प्रीणाति । धानाभिर्जुहोति । नक्षत्राणां वा एतद्रूपम् । यद्धानाः । यद्धानाभिर्जुहोति । नक्षत्राण्येव तत्प्रीणाति । सक्तुभिर्जुहोति । प्रजापतेर्वा एतद्रूपम् । यत्सक्तवः । यत्सक्तुभिर्जुहोति ॥ ५४ ॥ प्रजापतिमेव

[१]रूपवत्प्रियतमत्वात् आज्यमग्निरूपम् । एवं सर्वत्र । महती देवता महादेवः विश्वाधिक्यं महत्त्वम् । तण्डुलाः व्रीहितण्डुलाः । पृथुकाः चिपिटकाः । लाजाः व्रीहिभवाः तण्डुलपरिणामाः । करम्भाः आज्यमिश्रितास्सक्तवः । धानाः यवप्रभवाः तण्डुलपाकाः । सक्त-

तत्प्रीणाति । मसूस्यैर्जुहोति । सर्वासां वा एतद्दे-वतानाꣳ रूपम् । यन्मसूस्यानि । यन्मसूस्यैर्जुहो-ति । सर्वा एव तद्देवताः प्रीणाति । प्रियङ्गुतण्डु-लैर्जुहोति । प्रियाङ्गा ह वै नामैते । एतैर्वै देवा अश्वस्याङ्गानि समदधुः । यत्प्रियङ्गुतण्डुलैर्जुहोति। अश्वस्यैवाङ्गानि संदधाति । दशान्नानि जुहोति । दशाक्षरा विराट् । विराट्कृत्स्नस्यान्नाद्यस्यावरु-द्ध्यै ॥ ५५॥

जुहोति मधुना जुहोति पृथुकैर्जुहोति करम्बै-र्जुहोति सक्तुभिर्जुहोति प्रियङ्गुतण्डुलैर्जुहोति च-त्वारि च ॥ १४॥

अन्नहोमानाज्येनाग्रेर्मधुना तण्डुलैः पृथुकैर्ला-जैः करम्बैर्धानाभिस्सक्तुभिर्मसूस्यैः प्रियङ्गुतण्डुलै-र्दशान्नानि द्वादश ॥

---

वः लाजपेषाः । मसूस्यानि मसूस्यतण्डुलाः । प्रियङ्गुतण्डुलाः कङ्गुकणिकाः । प्रियाङ्गा ह वा इति । प्रियाङ्गत्वात् प्रियङ्गुत्वं अश्वाङ्गसन्धानसाधनत्वात् । पृषोदरादिः । सर्वाणि मिश्रीकृत्य जुहोति—दशेति ॥

इति तृतीये अष्टमे चतुर्दशोऽनुवाकः.

[1]प्रजापतिरश्वमेधमसृजत । तꣳ सृष्टꣳ रक्षाꣳस्यजिघाꣳसन् । स एतान्प्रजापतिर्नक्तꣳ होमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षाꣳस्यपाहन् । यन्नक्तꣳ होमाञ्जुहोति । यज्ञादेव तैर्यजमानो रक्षाꣳस्यपहन्ति । आज्येन जुहोति । वज्रो वा आज्यम् । वज्रेणैव यज्ञाद्रक्षाꣳस्यपहन्ति ॥ ५६ ॥ आज्यस्य प्रतिपदं करोति । प्राणो वा आज्यम् । मुखत एवास्य प्राणं दधाति । अन्नहोमाञ्जुहोति । शरीरवदेवावरुन्धे । व्यत्यासं जुहोति । उभयस्यावरुध्यै । नक्तं जुहोति । रक्षसामपहत्यै । आज्येनान्ततो जुहोति ॥ ५७ ॥ प्राणो वा आज्यम् । उभयत एवास्य प्राणं दधाति । पुरस्ताच्चोपरिष्टाच्च ।

---

[1]प्रजापतिरश्वमेधमित्यादि ॥ गतम् । वज्रो वा इति । अनिष्टनिवारणसाधनत्वसाम्यात् । प्रतिपदं उपक्रमं आज्यस्य करोति जुहोति प्रथमं आज्यस्य करोति । प्रथममनुवाकमित्येके । प्रत्यनुवाकं प्रथमाहुतिमित्यन्ये । प्राणो वा इति । तत्स्थितिहेतुत्वात् । शरीरवदिति । अन्नपरिणामत्वात् शरीरस्य, शरीरवत् सर्वं वस्तु गवादिकं लभते । व्यत्यासमिति । व्यत्यस्य व्यत्यस्य आज्यं अन्नं आज्यं अन्नमिति । अयुजोऽनुवाकान् प्रथमादि-

एकस्मै स्वाहेत्याह । अस्मिन्नेव लोके प्रतितिष्ठ-ति । द्वाभ्याꣳ स्वाहेत्याह । अमुष्मिन्नेव लोके प्रति तिष्ठति । उभयोरेव लोकयोः प्रति तिष्ठति। अस्मिꣳश्चामुष्मिꣳश्च । ²शताय स्वाहेत्याह । शतायुर्वै पुरुषश्शतवीर्यः । आयुरेव वीर्यमवरुन्धे । सहस्राय स्वाहेत्याह । आयुर्वै सहस्रम् । आयुरे-

नवमान्तान् आज्येन । युजस्तु द्वितीयादिदशमान्तानन्नेन । अन्तत इति । अन्त्यानुवाकमित्येके । सर्वस्मा इत्येतत् प्रत्यनुवाकमित्यन्ये । 'उषसे स्वाहा व्युष्ट्यै स्वाहा'* इत्यतः प्रागित्यपरे । उभयत इति । आदावन्ते च आज्यस्य होमात् । अस्मिन् इति । प्राथम्यात् प्रथमेनायुग्महोमेन मनुष्यलोके प्रतितिष्ठति । द्वितीयत्वात् द्वितीयेन युग्महोमेन अमुष्मिन् स्वर्गादिलोके प्रति तिष्ठति । उपलक्षणे चैते युग्मायुग्मसंख्यानाम् । किमन्यतरलोकप्रतिष्ठैव? नेत्याह—उभयोरेवेति । उभयसंख्याहोमेन उभयलोकप्रतिष्ठेति भावः ॥

²शतायुर्वा इति ॥ प्रत्यनुवाकं शतसंख्यान्वयात् शतसंख्ययोः पुरुषायुर्वीर्ययोर्लाभः । आयुर्वा इति । एवं एकस्मा इत्यारभ्य नवभिरनुवाकैः सहस्रान्ताः संख्याः हुताः । बहुप्रकारत्वात्

*ब्रा. ३-८-१६.

वावरुन्धे । सर्वस्मै स्वाहेत्याह । अपरिमितमेवावरुन्धे ॥ ५८ ॥

एव यज्ञाद्रक्षाꣳस्यपहन्त्यन्ततो जुहोति शतायु स्वाहेत्याह सप्त च ॥ १५ ॥

[1]प्रजापतिं वा एष ईप्सतीत्याहुः । योऽश्वमेधेन यजत इति । अथो आहुः । सर्वाणि भूता-

सहस्रमित्यायुरुच्यते । सर्वं अभिमतं आयुर्लभते सहस्रावधिकमिति यावत् । अपरिमितमिति । इदं अस्यायुरिति यन्नियतं ततोऽप्यधिकं लभते ॥

इति तैत्तिरीयब्राह्मणे तृतीये अष्टके अष्टमे प्रपाठके
अश्वमेधे प्रथमे पञ्चदशोऽनुवाकः.

[1]प्रजापतिं वा इत्यादि ॥ एषः प्रजापतिं ईप्सति प्रजापतिमहिमानं आप्तुमिच्छति योऽश्वमेधेन यजते । अपि च सर्वाण्यपि भूतानि आप्तुमिच्छति । तत्र संख्याविशेषहोमेन तत्तत्संख्येयविशेषपदार्थप्रभवाभिजयः यजमानस्य भवति । तत्प्रकारप्रदर्शनार्थं पुनरप्येकत्वादीनां स्तुतिः क्रियते । पूर्वत्र तु युग्मायुग्मसंख्यान्वयहोमेन द्यावापृथिव्योः प्रतिष्ठोक्ता । अत्र तु सर्वभूताभिजय इति ॥

नीति । एकस्मै स्वाहेत्याह । [2]प्रजापतिर्वा एकः । तमेवाप्नोति । एकस्मै स्वाहा द्वाभ्याᳪ स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । अभिपूर्वमेव सुवर्गं लोकमेति । [3]एकोत्तरं जुहोति ॥५१॥ एकवदेव सुवर्गं लोकमेति । सन्ततं जुहोति । सुवर्गस्य लोकस्य सन्तत्यै । शताय स्वाहेत्याह । शतायुर्वै पुरुषश्शतवीर्यः । आयुरेव वीर्यमवरुन्धे । सहस्राय स्वाहे-

---

[2]प्रजापतिर्वा एक इति ॥ तद्व्यतिरिक्तस्य प्रपञ्चान्तर्गतस्याभावात् । अभिपूर्वमिति । एकत्वादिक्रमेण संख्याहोमात् तत्तत्संख्येयानि वस्तूनि एकादिक्रमेणाभिजित्य सुखैकभूमिं लोकं परं प्राप्तव्यं गच्छति यत्र न संख्यावच्छेदः । प्रजापतिव्यतिरिक्तै-कत्वावच्छिन्नाभावार्थं पुनरेकस्मा इत्युपात्तम् ॥

[3]एकोत्तरमिति ॥ एकैकोत्तरमेकादिसंख्यां जुहोति तत्सामर्थ्यात् एकवदेव एकेनैव यत्नेन सर्वमभिजित्य स्वर्गं गच्छति । एकं वस्तु जेतुं यावान्यत्नस्तावानेव स्वर्गजयेऽपीति यावत् । उपलक्षणत्वात् द्व्युत्तरादयोऽपि गृह्यन्ते । सन्ततमिति । संख्यान्तरेणाविच्छेदात् अविच्छेदेन स्वर्गं गच्छति । द्व्युत्तरादिष्वपि विजातीयव्यवच्छेदाभावेन सन्ततत्वं वेदितव्यम् । शतसहस्रयोरायुष्ट्वेन प्राधान्यात् पृथगुपादानम् । अय इति । अयुतादिसंख्यासंबन्धः पृथिव्यादीनां तावत्कालावस्थानादिना द्रष्टव्यः । सर्वा-

त्याह । आयुर्वै सहस्रम् । आयुरेवावरुन्धे । अयुताय स्वाहा नियुताय स्वाहा प्रयुताय स्वाहेत्याह ॥ ६० ॥ त्रय इमे लोकाः । इमानेव लोकानवरुन्धे । अर्बुदाय स्वाहेत्याह । वाग्वा अर्बुदम् । वाचमेवावरुन्धे । न्यर्बुदाय स्वाहेत्याह । यो वै वाचो भूमा । तन्न्यर्बुदम् । वाच एव भूमानमवरुन्धे । समुद्राय स्वाहेत्याह ॥ ६१ ॥ समुद्रमेवाप्नोति । मध्याय स्वाहेत्याह । मध्यमेवाप्नोति । अन्ताय स्वाहेत्याह । अन्तमेवाप्नोति । परार्धाय स्वाहेत्याह । परार्धमेवाप्नोति । उषसे स्वाहा व्युष्ट्यै स्वाहेत्याह । रात्रिर्वा उषाः । अहर्व्युष्टिः । अहोरात्रे एवावरुन्धे । अथो अहोरात्रयोरेव प्रति

श्चेताः शतादयः परार्धपर्यन्ताः संख्या दशोत्तराः । अत्र संख्यासंख्येययोरभेदेन निर्देशः । समुद्रमेवेति । समुद्रादिसंख्यासंख्येयान् भावान्विजित्य प्रजापतिमेव प्राप्नोति । अहोरात्रे इति । अहश्च रात्रिश्च विधेयीकरोति । अपि च तयोः प्रतिष्ठितश्च भवति । अत्राहुः—शरीरावच्छिन्नस्य पुरुषस्यायुश्शतम् । आयुषः अन्नस्य आयुस्सहस्रम् । पृथिव्या आयुरयुतम् । अन्तरिक्षस्यायुर्नियुतम् । दिव आयुः प्रयुतम् । वाच आयुरर्बु-

तिष्ठति । ता यदुभयीर्दिवा वा नक्तं वा जुहुयात् । अहोरात्रे मोहयेत् । उषसे स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वाहोद्यते स्वाहेत्यनुदिते जुहोति । उदिताय स्वाहा सुवर्गाय स्वाहा लोकाय स्वाहेत्युदिते जुहोति । अहोरात्रयोरव्यतिमोहाय ॥६२॥

एकोत्तरं जुहोति प्रयुताय स्वाहेत्याह समुद्राय स्वाहेत्याहाहव्युंष्टिस्सप्त च ॥ १६ ॥

दम् । वाचो महिमा मनः तस्यायुर्न्यर्बुदम् । प्राणस्य आयुः समुद्रः । अहङ्कारस्यायुः मध्यः । चित्तस्यायुरन्तः । प्राजापत्यस्याहोरात्रस्य अर्धं यत् तस्यायुः परार्धम् । तदवयवानां उषःप्रभृतीन्यायूंषि । रात्र्युपक्रमत्वात् रात्रिः उषा । अहः रात्रेः मुखं यत्र सा व्युष्टिः । अह्नः प्रत्यासत्तिर्यत्र स उदेष्यन् । अह्न आरम्भ उद्यन् । अहोरात्रस्यावमानं अहोरात्रस्यार्धम् । आरब्धभूयिष्ठो दिवस उदितः । मध्यममहस्स्वर्गः । अहोरात्रचतुर्भागत्रयमहोरात्रो लोकः, यत्र विश्वं लोक्यते । एवमेताननुवाकान् पुनःपुनरभ्यस्य रात्रिशेषं जुहोति । उभयीः प्राजापत्यस्याहो रात्रेश्च संबन्धिनीः सप्ताप्याहुतीः दिवैव नक्तमेव वा यदि जुहुयात् अहोरात्रे मोहयेत् विभागेन न व्यवस्थापयेत् संकीर्णे कुर्यात् । तस्मात्प्राजापत्यरात्रिसंबन्धिनीरनुदिते सूर्ये जुहोति । उदितायेत्यादिका अहस्संबन्धिनीः उदिते जुहोति । अहोरात्रयोरव्यतिमोहाय तद्भवति ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके अष्टमप्रपाठके षोडशोऽनुवाकः.

[1]विभूर्मात्रा प्रभूः पित्रेत्यश्वनामानि जुहोति । उभयोरेवैनं लोकयोर्नामधेयं गमयति । [2]आयनाय स्वाहा प्रायणाय स्वाहेत्युद्द्रावाञ्जुहोति । सर्वमेवैनमस्कन्नꣳ सुवर्गं लोकं गमयति । [3]अग्नये स्वाहा सोमाय स्वाहेति पूर्वहोमाञ्जुहोति । पूर्व एव

---

[1]विभूर्मात्रेत्यादि ॥

अत्राश्वमेधप्रभवप्रयुक्तप्रयोक्ष्यमाणाखिलकर्ममन्त्रैः ।
अन्नाहुतीर्ये विदधत्यथैषां मन्त्रानुपूर्वीं विदधात्यनेन ।
संख्याहुतीस्तास्सकृदेव हुत्वा परार्धपर्यन्तमथ क्रमेण ।
हुत्वाऽश्वनामप्रभृतीनि रात्रेः शेषोऽथ संख्याहुतिभिस्समाप्यः ॥

विभूर्मात्रेत्याद्या होमाः अश्वनामाख्याः अश्वनाम्नः स्तुतिरूपत्वात् तेषां होमाः । 'इयं वै माता । असौ पिता'* इति द्यावापृथिव्योः एनं यजमानं नामधेयं गमयति प्रापयति प्रशस्तनामधेयवन्तं करोति अश्वनाम्नां होमेन । यद्वा—यत्रास्य नाम प्रथितं तत्रैतं गमयति यत्रायं गच्छति तत्रास्य प्रशस्तं नाम गमयति॥

[2]उद्द्रावानिति ॥ छत्रिन्यायेन उद्द्रावशब्दयोगात् । एनं यजमानं अस्कन्नं कदाचिदपि अप्रच्युतं स्वर्गं गमयति उद्द्रवणस्वभावत्वात् । अत एव तेन समुदायलक्षणा ॥

[3]पूर्वहोमानिति ॥ अश्वहोमापेक्षं पूर्वत्वम् । तेषां होमात्प्रथममेव द्विषन्तमतिक्रामति प्रथमभावित्वात् ॥

---

* ब्रा. ३-८-९.

द्विषन्तं भ्रातृव्यमतिक्रामति । [4]पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्याह । यथायजुरेवैतत् । [5]अग्नये स्वाहा सोमाय स्वाहेति पूर्वदीक्षा जुहोति । पूर्वं एव द्विषन्तं भ्रातृव्यमतिक्रामति ॥ ६ ३ ॥ [6]पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहेत्येकविꣳशिनीं दीक्षां जुहोति । एकविꣳशतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रयं इमे लोकाः । असावादित्य एकविꣳशः । एष सुवर्गो लोकः । सुवर्गस्यं लोकस्य समंष्ट्यै । [7]भुवो देवानां कर्मणेत्यृतुदीक्षा जुंहोति । ऋतूनेवास्मैं कल्पयति । [8]अग्नये स्वाहा वायवे स्वाहेति जुहोत्यनन्तरित्यै ॥ ६ ४ ॥

[4]यथायजुरिति ॥ यथामन्त्रं तद्देवताहोमफलं लभत एव ॥

[5]पूर्वदीक्षा इति ॥ पूर्वकालभाविनो दीक्षाख्या होमाः ॥

[6]एकविंशिनीमिति ॥ एकविंशतिमन्त्रपरिमाणा । 'विंशतेश्च' इति डिनिः । एकविंशतिर्वा इत्यादि । गतम् ॥

[7]ऋतुदीक्षा ऋतुशब्दवद्भिः मन्त्रैः साध्याः । कल्पयति यथार्थं प्रवर्तयति ॥

[8]अनन्तरित्यै अनन्तर्हितत्वाय यजमानस्य 'प्रजापतिरसि'* इति तद्भावेन सर्वेषु कालेषु व्याप्तत्वात् ॥

* आ. ३-७-६.

[9]अर्वाङ्यज्ञस्संक्रामत्वित्याप्तीर्जुहोति । सुवर्गस्य लोकस्याप्त्यै । भूतं भव्यं भविष्यदिति पर्याप्तीर्जुहोति । सुवर्गस्य लोकस्य पर्याप्त्यै । आ मे गृहा भवन्त्वित्याभूर्जुहोति । सुवर्गस्य लोकस्याभूत्यै । अग्निना तपोऽन्वभवदित्यनुभूर्जुहोति । सुवर्गस्य लोकस्यानुभूत्यै । स्वाहाऽऽधिमाधीताय स्वाहेति समस्तानि वैश्वदेवानि जुहोति । समस्तमेव द्विषन्तं भ्रातृव्यमतिक्रामति ॥६५॥ [10]दद्भ्यस्स्वाहा हनूभ्यां स्वाहेत्यङ्गहोमाञ्जुहोति । अङ्गेअङ्गे वै पुरुषस्य पाप्मोपश्लिष्टः । अङ्गादङ्गादेवैनं पाप्मनस्तेन मुञ्चति । [11]अञ्ज्येताय स्वाहा कृष्णाय स्वाहा श्वेताय स्वाहेत्यश्वरूपाणि जुहोति । रूपैरेवैन

[9]आप्तयः सर्वाप्तिसाधनत्वात् । पर्याप्तयः पर्याप्तविभूतिसाधनत्वात् । आभुवः गृहादीनामाभिमुख्येन भवनहेतुत्वात् । अनुभुवः तपःप्रभृतीनामनुभवसाधनत्वात् । वैश्वदेवानि प्रजापत्यादिविश्वदेवाराधनत्वात् । समस्तग्रहणं दीक्षाहुत्यादिष्वंशेन विनियोगात् ॥

[10]अङ्गेअङ्गे सर्वस्मिन्नङ्गे । सर्वाङ्गहोमात् सर्वाङ्गप्रभवात् पापान्मुक्तो भवति यजमानः ॥

[11]'अञ्ज्येताय स्वाहा, कृष्णाय स्वाहा श्वेताय स्वाहा'*

*सं. ७-१-१७, १८.

समर्धयति । ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहे-त्यौषधिहोमाञ्जुहोति । द्वय्यो वा ओषधयः । पुष्पेभ्योऽन्याः फलं गृह्णन्ति । मूलेभ्योऽन्याः । ता एवोभयीरवरुन्धे ॥ ६६ ॥ [12]वनस्पतिभ्यस्स्वाहेति वनस्पतिहोमाञ्जुहोति । आरण्यस्यान्नाद्यस्यावरुध्यै । [13]मेषस्त्वा पचतैरवत्वित्यपाव्यानि जुहोति । प्राणा वै देवा अपाव्याः । प्राणानेवावरुन्धे । [14]कूप्याभ्यस्स्वाहाऽद्भ्यस्स्वाहेत्यपाꣳ होमाञ्जुहोति । अप्सु वा आपः । अन्नं वा आपः । अद्भ्यो वा

इत्यनुवाकद्वयस्य प्रतीकग्रहणम् । गृह्णन्तीति । 'एकान्याभ्याम्' इति निघाताभावः । ता एवेति । द्विप्रकारौषध्युपादानात् ॥

[12]आरण्यस्येति ॥ वनानां पतयो वनस्पतयः इति तेषामरण्यप्रभवत्वात् ॥

[13]अपाव्यानीति ॥ सर्वस्य पावनत्वात् । स्वयं केनचिदपाव्या मेषादयः तत्प्रतिपादकत्वात् मन्त्राणामपाव्यत्वात् तदवरोधः॥

[14]कूप्याभ्यस्स्वाहा, अद्भ्यस्वाहेत्यपां होमान् जुहोतीत्यनुवाकद्वयो* पादानम् । अपां होमेन अप्कारणकं सर्वमन्नमवरुन्धे । तत्राप्छब्देन अप्कारणकमन्नमुच्यते । व्यापकत्वाद्वा अन्नस्य । निमित्तात्सप्तमी । अन्ननिष्पत्त्यर्थं हि आपः कूप्यादीन् व्याप्य

*सं. ७-४-१३, १४.

अन्नं जायते। यद्देवाद्भ्योऽन्नं जायते। तदवरुन्धे॥६७

पूर्वदीक्षा जुहोति पूर्वं एव द्विषन्तं भ्रातृव्यमतिक्रामत्यनन्तरित्यै क्रामति रुन्धे जायत एकं च॥

'अम्भाꣳसि जुहोति। अयं वै लोकोऽम्भाꣳसि। तस्य वसवोऽधिपतयः। अग्निर्ज्योतिः। यदम्भाꣳसि जुहोति। इममेव लोकमवरुन्धे। वसूनाꣳ

---

वर्तन्ते। तस्मात् स्वयमन्नमेवापः तत्कारणत्वात्, तदेवाह—अद्भ्यः खलु अन्नं जायते तस्मादद्भ्यो जायते यदन्नं तदवरुन्धे॥

इति तैत्तिरीयब्राह्मणे तृतीये अष्टमे अश्वमेधे
सप्तदशोऽनुवाकः.

'अम्भांसीत्यादि॥ 'अम्भोभ्यस्स्वाहा'* इति बहुवचनेन होमोऽभिप्रेतः। अयं खलु मनुष्यलोकः सर्वेषां अम्भसां आधारत्वात् अम्भांसि, तदाधारत्वात्ताच्छब्द्यम्। अदनीयान्यन्नानि अम्भांसि। अदेः 'उदके नुम्भौ च' इत्यसुन्। तस्य वसवः अन्नस्वामिनः अग्निः द्योतयिता॥

---

*सं. ७-४-१४.

सायुज्यं गच्छति । अग्निं ज्योतिरवरुन्धे । [2]नभा-
ꣳसि जुहोति । अन्तरिक्षं वै नभाꣳसि ॥ ६८ ॥
तस्य रुद्रा अधिपतयः । वायुर्ज्योतिः । यन्न-
भाꣳसि जुहोति । अन्तरिक्षमेवावरुन्धे । रुद्रा-
णाꣳ सायुज्यं गच्छति । वायुं ज्योतिरवरुन्धे ।
[3]महाꣳसि जुहोति । असौ वै लोको महाꣳसि ।
तस्यादित्या अधिपतयः । सूर्यो ज्योतिः ॥ ६९ ॥
यन्महाꣳसि जुहोति । अमुमेव लोकमवरुन्धे ।
आदित्यानाꣳ सायुज्यं गच्छति । सूर्यं ज्योतिरव-
रुन्धे । [4]नमो राज्ञे नमो वरुणायेति यव्यानि जु-

[2]नभांसीति ॥ 'नभोभ्यस्स्वाहा'* इति जुहोति । नभश्चा-
रिणः नभांसि । गतमन्यत् ॥

[3]महांसीति ॥ 'महोभ्यस्स्वाहा'* इति जुहोति । महस्विनः
तेजस्विनः पूजनीया वा देवा महांसि । समानमन्यत् ॥

[4]यव्यानि 'मां धेहि मयि धेहि'† इति यजमानस्य स्वा-
मित्वेन सर्वाभिः प्रजाभिः मिश्रणसाधनत्वात् प्रजानां च अन्न-
सिद्धिहेतुत्वात् अन्नलाभः । यद्वा—राजा सोमः स च यवा-
द्योषधीशः इति तत्संबन्धात् द्रव्याणि यव्यानि 'अन्नाद्यस्य'
इत्यूजुर्भवति ॥

*सं. ७-४-१४, † सं. ७-४-१६.

होति । अन्नाद्यस्यावरुध्यै । मयोभूर्वातो अभि वातूस्रा इति गव्यानि जुहोति । पशूनामवरुध्यै । [6]प्राणाय स्वाहा व्यानाय स्वाहेति संततिहोमाञ्जुहोति । सुवर्गस्य लोकस्य संतत्यै ॥ ७० ॥ [7]सिताय स्वाहाऽसिताय स्वाहेति प्रमुक्तीर्जुहोति । सुवर्गस्य लोकस्य प्रमुक्त्यै । पृथिव्यै स्वाहाऽऽन्तरिक्षाय स्वाहेत्याह । यथायजुरेवैतत् । [8]दत्वते स्वाहाऽदन्तकाय स्वाहेति शरीरहोमाञ्जुहोति ।

[5]गव्यानीति ॥ गोभ्यो हितानि गवां सुखसाधनत्वात् । उस्राः गावः सर्वेषां गवादीनां पशूनां लाभाय भवति ॥

[6]सन्ततिहोमाः—'सन्तानेभ्यस्स्वाहा'* इति ॥ सन्ततियोगात् । स्वर्गस्य सन्तत्यै अविच्छेदाय तद्भवति । प्राधान्यात् तेन समुदायलक्षणा ॥

[7]प्रमुक्तयः—'प्रमुक्ताय स्वाहा'† इति ॥ प्रमुक्तियोगात् । यजमानार्थं स्वर्गस्य प्रमुक्त्यै ऐदमर्थ्येन भोक्रन्तरात् पृथक्करणम् । यद्वा—मुक्तिर्विरहः तन्निवृत्तिः प्रमुक्तिः प्रस्थानप्रपूरणादिवत् द्रष्टव्यम् ॥

[8]पितृलोकमिति ॥ शरीरावयवहोमेन शरीरेष्वनुप्रविश्य तृप्तिभाजां पितृणां लोकावरोधः ॥

*सं. ५-४-२१. † सं. ७-४-२२.

पितृलोकमेव तैर्यजमानोऽवरुन्धे । [9]कस्त्वा युनक्ति स त्वा युनक्त्विति परिधीन् युनक्ति । इमे वै लोकाः परिधयः । इमानेवास्मै लोकान् युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै ॥ ७१ ॥ [10]यः प्राणतो य आत्मदा इति महिमानौ जुहोति । सुवर्गो वै लोको महः । सुवर्गमेव ताभ्यां लोकं यजमानोऽवरुन्धे । आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामिति समस्तानि ब्रह्मवर्चसानि जुहोति । ब्रह्मवर्चसमेव तैर्यजमानोऽवरुन्धे । जज्ञि बीजमिति जुहोत्यनन्तरित्यै । अग्नये समनमत्पृथिव्यै सम-

[9]परिधीन् युनक्तीति ॥ स्वस्थाने युनक्ति स्थापयति प्रमादाच्चलितान् । यद्वा—हस्तेन स्पृष्ट्वा इत उत्तरान् होमान् जुहोति । इमान् लोकान् यजमानाय भोगार्थं योजयति स्वर्गस्य सम्यक् प्राप्तये भवति तल्लोकयोगेन कर्मजयात् ॥

[10]यः प्राणतो य आत्मदा इत्यनुवाकौ महिमनामानौ 'तस्य ते द्यौर्महिमा, तस्य ते पृथिवी महिमा'* इति महिमशब्दवत्त्वात् । मह इति । महस्स्वतो भावो महिमा, स च महः पूजा । तद्धेतुत्वात् ताच्छब्द्यम् । 'अन्येषामपि' इति पूर्वपदस्य दीर्घत्वम् ॥

* सं. ७-६-१६, १७.

नमदिति सन्नतिहोमाञ्जुहोति । सुवर्गस्य लोकस्य संनत्यै । [11]भूताय स्वाहा भविष्यते स्वाहेति भूताभव्यौ होमौ जुहोति । अयं वै लोको भूतम् ॥ ७२ ॥ असौ भविष्यत् । अनयोरेव लोकयोः प्रतितिष्ठति। सर्वस्याप्त्यै । सर्वस्यावरुध्यै । [12]यदक्रन्दः प्रथमं जायमान इत्यश्वस्तोमीयं जुहोति । सर्वस्याप्त्यै । सर्वस्य जित्यै । सर्वमेव तेनाप्नोति। सर्वं जयति । योऽश्वमेधेन यजते ॥ ७३ ॥ य उ चैनमेवं वेद । [13]यज्ञꣳ रक्षाꣳस्यजिघाꣳसन् । स

[11]अयं वै लोको भूतं भूतजातयोगात् ताच्छब्द्यम् । असौ भविष्यदिति भविष्यच्छब्दः भविष्यत्त्वं व्युत्पादयति । सर्वस्येति । लोकद्वयाधारत्वात् सर्वस्य । तयोः प्रतिष्ठितेन सर्वं माप्तं भवति । सर्वमवरुद्धं वशीकृतं भवति ॥

[12]अश्वस्तोमीयमिति ॥ अश्वस्तुतिप्रयोजनानुवाकोऽश्वस्तोमीयः। आप्तिर्लाभः । जयो वशीकारः। तदुभयमश्वस्तोमहोमात् भवति। यस्मादेवं तस्मात् अश्वमेधयाजी अश्वमेधमहिमवेदी च सर्वमाप्तव्यमाप्नोति, जयति च सर्वं जेतव्यम् ॥

[13]यज्ञमित्यादिनक्तहोमानां पुनर्विधानं सर्वस्या रात्रेर्नक्तहोमैरशून्य-

एताम्प्रजापतिर्नक्त॑होमानपश्यत् । तानजुहोत् । तैर्वै स यज्ञाद्रक्षा॑स्यपाहन् । यन्नक्त॑होमाञ्जुहोति । यज्ञादेव तैर्यजमानो रक्षा॑स्यप हन्ति । उषसे स्वाहा व्युष्ट्यै स्वाहेत्यन्ततो जुहोति । सुवर्गस्य लोकस्य समष्ट्यै ॥ ७४ ॥

वै नभा॑सि सूर्यो ज्योतिस्संतत्यै समष्ट्यै भूतं यजते नव च ॥ १८ ॥

[1]एकयूपो वैकादशिनी वा । अन्येषां यज्ञानां यूपा भवन्ति । एकवि॑शिन्यश्वमेधस्य । सुवर्गस्य

तापिधानार्थम् । ते ।तत्सिद्धं—अश्वस्तोमीयानन्तरं 'एकस्मै स्वाहा'* इत्येतेऽनुवाकाः पुनःपुनरभ्यासं रात्रिशेषं होतव्या इति । अन्तत इति । रात्र्यवसाने । उदितायेत्यादि समुदिते ॥

इति तृतीये अष्टमे अश्वमेधे अष्टादशोऽनुवाकः.

[1]एकयूपो वेत्यादि ॥ एको यूपः एकयूपः 'पूर्वकालैक' इति समासः । एकादशिनी एकादशपरिमाणवती यूपरीतिरेकादशिनी 'शङ्क्वत्रोर्डिनिः' इति डिनिप्रत्ययः । अन्येषां अश्वमेधव्यतिरिक्तानां एको वा एकादश यूपा वा भवन्ति । अश्व-

* सं. ७-२-११.

लोकस्याभिजित्यै । [2]बैल्वो वा खादिरो वा पालाशो वा । अन्येषां यज्ञक्रतूनां यूपा भवन्ति । राज्जुदाल एकविꣳशत्यरत्निरश्वमेधस्य । सुवर्गस्य लोकस्य समष्ट्यै । नान्येषां पशूनां तैजन्या अवद्यन्ति । अवद्यन्त्यश्वस्य ॥ ७५ ॥ पाप्मा वै तैजनी । पाप्मनोऽपहत्यै । प्लक्षशाखायामन्येषां पशूनामवद्यन्ति । वेतसशाखायामश्वस्य । अप्सुयोनिर्वा अश्वः । अप्सुजो वैतसः । स्व एवास्य

मेधस्य त्वेकविंशतिः यूपरीतिर्भवति । उपशयपात्नीवतविशालयूपव्यतिरिक्ता एकविंशतिपरिमाणाः यूपाः । 'विंशतेश्च' इति डिनिः । तत्स्वर्गस्य अभिजयाय भवति 'असावादित्य एकविंशः । एष सुवर्गो लोकः'* इति ॥

[2]बैल्वो वेति ॥ अग्निष्ठस्येदं लक्षणम् । यूपवन्तो यज्ञक्रतवः । राज्जुदालः श्लेष्मातकः । 'अनुदात्तादेश्च' इत्यञ् । चतुर्विंशतिरङ्गुलयोऽरत्निः । समष्ट्या इति । उच्छ्रायस्यापि स्वर्गत्वात् । सम्यक्प्राप्तिः उपशयादयः प्राकृतपरिमाण एव । तेजनी रुचिराख्या मांसस्नुक् स्व एवेति । आत्मीये योनौ कार्येऽपि कारणस्य विद्यमानत्वात् ॥

*ब्रा. १-८-१७.

योनावर्वंध्यति । [3]यूपेषु ग्राम्यान्पशून्नियुञ्जन्ति । आरोकेष्वारण्यान्धारयन्ति । पशूनां व्यावृत्त्यै । आ ग्राम्यान्पशून्लभन्ते । प्रारण्यान्थ्सृजन्ति । पाप्मनोऽपहत्यै ॥७६॥

अश्वस्य व्यावृत्त्यै त्रीणि च ॥१९॥

[1]राज्जुदालमग्निष्ठं मिनोति । भ्रूणहत्याया अपहत्यै । पौतुद्रवावभितो भवतः । पुण्यस्य गन्ध-

---

[3]ग्राम्याः 'रोहितो धूम्ररोहितः'* इत्यादयः । तान् यूपेषु नियुञ्जन्ति । आरण्यांस्तु आरोकेषु आलोकेषु यूपान्तरावकाशेषु धारयन्ति संविधापयन्ति । आरण्याः 'इन्द्राय राज्ञे सूकरः'† इत्यादयः । पुरुषमृगादीनां दुर्ग्रहाणां पटादौ लिखितानामुपचारमात्रं कर्तव्यमिति प्रदर्शनार्थं धारयन्तीत्युक्तम् । पञ्जरादिषु धारयन्तीत्यन्ये । ग्राम्यानालभन्ते नियुक्तानेव स्थापयन्ति । कृते पर्यग्निकरणे आरण्यान् प्रसृजन्ति उत्सृजन्ति पापापघाततुल्यं तद्भवति॥

इति तैत्तिरीयब्राह्मणे तृतीये अष्टके अष्टमे प्रपाठके
अश्वमेधे प्रथमे एकोनविंशोऽनुवाकः.

---

[1]राज्जुदालमित्यादि ॥ अग्निसकाशे तिष्ठतीत्यग्निष्ठः तं मिनोति ऊर्ध्वं स्थापयति । राज्जुदालः श्लेष्मातकः तत् भ्रूणहत्यानां

---

* सं. ५-६-११. † सं. ५-५-११.

स्यावरुध्यै । भ्रूणहत्यामेवास्मादपहत्य । पुण्येन गन्धेनोभयतः परिगृह्णाति । [2]षड्बैल्वा भवन्ति । ब्रह्मवर्चसस्यावरुध्यै । षट्खादिराः । तेजसोऽवरुध्यै ॥ ७७॥ षट्पालाशाः । सोमपीथस्यावरुध्यै । एकवि॰शतिस्संपद्यन्ते । एकवि॰शतिर्वै देवलोकाः । द्वादश मासाः पञ्चर्तवः । त्रय इमे लोकाः । असावादित्य एकवि॰शः । एष सुवर्गो लोकः । सुवर्गस्य लोकस्य समष्ट्यै । [3]शतं पशवो भवन्ति॥

---

महापातकानां पापानां अपघाताय भवति । गर्भो भ्रूण इति केचित् । चतुर्वेदी भ्रूण इत्यन्ये । क्षत्रियो भ्रूण इत्यपरं । 'हनस्त च' इति क्यप् । पौतुद्रवौ देवदारुमयौ अग्निष्ठमभितो भवतः पुण्यात्मनो गन्धस्यावरोधाय भवति । यस्मादेते त्रयो यूपा भवन्ति तस्मात् भ्रूणहत्यादिकमपि महापापं अस्मात् यजमानादपहत्य पुण्यलक्षणेन गन्धेन एनं यजमानं उभयतः उभयोर्वयसोरुभयोर्वा लोकयोः परिगृह्णाति ॥

[2]षडिति ॥ अभित इत्येव । पौतुद्रवात्रभितो दक्षिणतस्त्रय उत्तरतश्च त्रयो बैल्वा भवन्ति । एवं खादिरपालाशानां द्रष्टव्यः। एवमेषा यूपैकविंशतिः प्रदर्शिता । गतमन्यत्* ॥

[3]शतं पशव इति ॥ एकोनविंशत्यधिकपञ्चशतसंख्यानां पशूनां

---

*ब्रा. ३-८-१७.

७८॥ शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति । सर्वं वा अश्वमेध्याप्नोति । अपरिमिता भवन्ति । अपरिमितस्यावरुध्यै । [4]ब्रह्मवादिनो वदन्ति । कस्मात्सत्यात् । दक्षिणतोऽन्येषां

---

अवयुत्यानुवादस्स्तुत्यर्थः शतस्य । यद्वा—बहवश्चोदितसंख्याः पशवो भवन्तीत्यर्थः । तदेवाह—सर्वं वा इति । सर्वमभिमतमर्थमश्वमेधयाजी प्राप्नोति । तस्मात् बहवः पशवो भवन्तीति चोदितसंख्यास्तुतिः । पक्षान्तरमाह—अपरिमिता इति । सर्वं वा इत्युत्तरशेषो वा, सर्वं खल्वभिमतमश्वमेधयाजी प्राप्तुमर्हति । तस्मादपरिमिताः पशवो भवन्ति अपरिमितस्य फलस्य लाभाय ॥ अत्रैषा पशुसंख्या—

अश्वस्तूपरगोमृगौ तुरगपर्यङ्गया दश व्युत्तराः *
सन्त्यष्टादशिनस्त्वशीतिशतकं द्वाविंशतिः द्वन्द्विनः ।
सन्त्येकादशिनस्तथा प्रकृतिजैर्द्वाविंशतिर्वैकृताः
चातुर्मास्यपशूनवैहि सशतां पञ्चाधिकां त्रिंशतम् ॥
भूयः पञ्चदशैव पञ्चदशिनो ग्राम्या नवत्युत्तरान्
आरण्यान् त्रिशतान्यथर्तु (हितान्) पशवस्त्वष्टा दशारण्यजाः ।
ज्ञेयास्सूकरपूर्वकास्तु दशतोऽप्येकादशैते शतं
सर्वे पञ्चशती भवन्ति पशवोऽप्येकोनिता विंशतिः ॥

[4]द्वितीयेऽहनि उक्थ्ये एते पशव आलभ्यन्ते सौम्यत्वात् शान्तत्वात् वा । तस्मात् स्वायामेव दिशि अवदाय सादितं

---

* व्युत्तराः.

पशूनामवद्यन्ति । उत्तरतोऽश्वस्येति । वारुणो वा अश्वः ॥ ७९ ॥ एषा वै वरुणस्य दिक् । स्वायामेवास्य दिश्यवद्यति । यदितरेषां पशूनामवद्यति। शतदेवत्यं तेनावरुन्धे । [5]चितेऽग्रावधिवैतसे कटेऽश्वं चिनोति । अप्सुयोनिर्वा अश्वः । अप्सुजो वैतसः । स्व एवैनं योनौ प्रतिष्ठापयति । पुरस्तात्प्रत्यञ्चं तूपरं चिनोति । पश्चात्प्राचीनं गोमृगम् ॥ ८० ॥ प्राणापानावेवास्मिन्थ्सम्यञ्चौ दधाति । अश्वं तूपरं गोमृगमिति सर्वहुत एताञ्जुहोति । एषां

---

भवति । यतश्च इतरेषां सर्वेषामेव पशूनां दक्षिणतोऽवद्यति, बहुदेवत्यं यागफलं तेन लभते ॥

[5]वेतसनिर्मिते कटे आस्तीर्णे अश्वं प्राश्चं चिनोति प्राक्छिरसं शाययति । अप्सुयोनिर्वा इत्यादि । गतम् । तूपरः शृङ्गहीनः तमग्नेः पुरस्तात् प्रत्यक्छिरसं चिनोति गोमृगः हिंसारुचिः बलीवर्दः, तमग्नेः पश्चात् प्राक्छिरसं चिनोति । एवं कुर्वन् प्राणापानौ च यजमाने सम्यञ्चौ समीचीनगती स्थापयति । सर्वहुतं इति । कर्मणि क्विप् । वैतसेन कटेनाश्वतूपरगोमृगान् सर्वहुतं जुहोति । लोकत्रयाभिजयाय तद्भवति ॥

लोकानामभिजित्यै । [6]आत्मनाऽभिजुहोति । सात्मानमेवैनꣳ सतनुं करोति । सात्माऽमुष्मिन्लोके भवति । य एवं वेद । अथो वसोरेव धारां तेनावरुन्धे । [7]इलुवर्दाय स्वाहा बलिवर्दाय स्वाहेत्याह । संवथ्सरो वा इलुवर्दः । परिवथ्सरो बलिवर्दः । संवथ्सरादेव परिवथ्सरादायुरवरुन्धे । आयु-

[6]आत्मनेति ॥ आत्मीयशरीरावयवसंबन्धिभिः 'स्तेगान्दंष्ट्राभ्याम्'* इत्येतैरनुवाकैर्हुतमश्वमाज्येन अभिजुहोति हुतस्योपरि जुहोतीत्यर्थः । एनं हुतमश्वं सात्मानं सशरीरं सतनुं सर्वशरीरावयवसहितं च करोति । एवं वेदिता अमुष्मिन् लोके सात्मा सशरीर एव भवति गच्छति । अथो अपिच वसोर्धारां धनपरंपरां तेन होमेन लभते कर्ता तस्य वेदिता च ॥

[7]संवत्सरो वा इति ॥ इदानीं भ्रियत इति इलुवर्दः । परस्तात् भ्रियत इति परिवत्सरो द्वितीयो वत्सरो बलिवर्दः पृषोदरादित्वादभीष्टस्वरूपसिद्धिः । एवं संवत्सरपरिवत्सराभ्यां हेतुभ्यां तदात्मकं सर्वमायुरवरुन्धे न पुरुषायुषमध्ये म्रियते । तस्मादाभ्यां होमाभ्यामायुरस्मिन् यजमाने स्थापयति पूर्वैर्वसुधारालाभम् । यस्मादेवं तस्मात् अश्वमेधयाजी जरसा तन्वा विस्रसा हस्तपादादिविस्रंसनेन च इत्थंभूतस्सर्वमायुरवाप्य कृतार्थः

*सं. ५-७-१२.

रेवास्मिन्दधाति । तस्मादश्वमेधयाजी जरसा वि-
स्रसाऽमुं लोकमेति ॥ ८१ ॥

तेजसोऽवरुध्यै भवन्त्यश्वो गोमृगमिलुवदैश्च-
त्वारि च ॥ २० ॥

[1]एकविꣳशोऽग्निर्भवति । एकविꣳशस्स्तोमः ।
एकविꣳशतिर्यूपाः । [2]यथा वा अश्वा वरृषभा वा
वृषाणस्सꣳस्फुरेरन् । एवमेतꣳस्तोमास्सꣳस्फुरन्ते ।

---

अमुं लोकं गच्छति । जराग्रहणं चायुःकात्स्न्यार्थम् । अभि-
नवदेह एव पुरुषायुर्जीवति ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके अष्टमप्रपाठके विंशोऽनुवाकः.

---

[1]एकविंश इत्यादि ॥ एकविंशतिपुरुषप्रमाणोऽग्निरेकविंशति-
विधः एकविंशः । एकविंशस्तोत्रीयपरिमाणस्सर्वस्तोमो भवति,
मध्यमस्याह्न उक्थ्यस्यैवेदं लक्षणं, परिमाणे डप्रत्ययः । एक-
विंशतिर्यूपाः उपशयपात्नीवतविशालयूपव्यतिरिक्ताः ॥

[2]एवमग्निस्तोमयूपानामेकविंशत्वेन समपरिमाणत्वं विधाय तद्वि-
धानं, अनेन वक्ष्यमाणेनाग्न्यादीनां द्वादशत्वं विधास्यन् स्तो-
मानां एकविंशतित्वं दूषयति—यथेति ॥ अश्वा वा ऋषभा
वा यथा वृषाणस्सेक्तारः सेकशक्तिनिमित्तदर्पमदातिशयान्धाः

षड्वैकविꣳशाः । ते यथ्संमृच्छेरन् । हन्येतास्य यज्ञः । द्वादश एवाग्निस्स्यादित्याहुः । द्वादशस्स्तोमः ॥८२॥ एकादश यूपाः । यद्द्वादशोऽग्निर्भवति। द्वादश मासास्संवथ्सरः । संवथ्सरेणैवास्मा अन्नमवरुन्धे। [3]यद्दश यूपा भवन्ति। दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमव रुन्धे। य एकादशः। स्तन एवास्यै सः ॥८३॥ दुह एवैनां तेन । [4]तदाहुः । यद्द्वादशोऽग्निस्स्याद्द्वादशस्स्तोम एकादश

संस्फुरेरन् धर्षणोन्मुखा एव जृम्भन्ते एवमेते एकविंशास्स्तोमाः संस्फुरन्ते । तादृशाः ते यदि कदाचित् समृच्छेरन् संगतास्स्युः महाश्वा इव च महोक्षा इव च तदा हन्येत विमृद्येत अस्य यज्ञः । तस्मात् द्वादश एवाग्नयस्स्युः भवितुमर्हन्तीति आहुः पुराविदः एकविंशतिवत् नात्युद्रिक्ता द्वादशा इति भावः । यूपानामपि द्वादशप्रायत्वात् त्रयाणां तुल्यप्रमाणत्वम् ॥

[3]यदित्यादि ॥ गतम् * । अस्या इति विराजः । दुहे दुग्धे 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

[4]तदाहुरिति ॥ द्वादशत्वपक्षं दूषयति । तत्राहुरन्य इत्यर्थः। यथेति । स्थूरिः पष्ठवाही शकटादिः स यथा येन प्रकारेण धुर्येण युक्तो दुर्बल एव यानविषये एतत्तुल्यमिदं गन्तव्यप्राप्त्य-

* मा. १-८-६.

यूपाः । यथा स्थूरिणा यायात् । तादृक्तत् । एक-विꣳश एवाग्निस्स्यादित्याहुः। एकविꣳशस्स्तोमः। एकविꣳशतिर्यूपाः । यथा प्रष्टिभिर्यातिं । तादृगेव तत् ॥ ८४ ॥ [5]यो वा अश्वमेधे तिस्रः ककुभो वेद। ककुद्ध राज्ञां भवति । एकविꣳशोऽग्निर्भवति । ए-कविꣳशस्स्तोमः । एकविꣳशतिर्यूपाः । एता वा अश्वमेधे तिस्रः ककुभः । य एवं वेद । ककुद्ध राज्ञां भवति । [6]यो वा अश्वमेधे त्रीणि शीर्षाणि वेद । शिरो ह राज्ञां भवति । एकविꣳशोऽग्निर्भ-

---

साधनत्वात्, शकटादिभिस्सम एव याति न विषमे, तस्मात् एकविंश एवाग्न्यादयो भवितुमर्हन्तीत्याहुर्यज्ञविदः । यथा प्र-ष्टिभिः शिरोधारिभिः बहुभिर्याति तादृगेव तत् भवति समे विषमे च यानसामर्थ्यात् ॥

[5]ककुभ इति ॥ ऋषभावयवानां ककुदिव तत्स्थानीयाः प्रधा-नावयवाः ककुभः, तासां वेदिता राज्ञां मध्ये प्रधानभूतो भवति कर्ता । अस्य चार्थस्य यो वेदिता सोऽपि राज्ञां ककुत् भवति । ऋषभस्य ककुदिव राज्ञामुदात्ततताहेतुर्भवति ॥

[6]एवं प्रधानावयवत्वेन रूपयित्वा इदानीमुच्छ्रितत्वेन रूपयति— शीर्षाणीति ॥ 'शीर्ष छन्दसि' इति शीर्षादेशः । शरीरा-वयवानां मध्ये शिर इव राज्ञां मध्ये उच्छ्रितो भवति कर्ता।

वति । एकविꣳशस्स्तोमः । एकविꣳशतिर्यूपाः । एतानि वा अश्वमेधे त्रीणि शीर्षाणि । य एवं वेद । शिरो ह राज्ञां भवति ॥८५॥

द्वादशस्स्तोमस्स एव तच्छिरो ह राज्ञां भवति षट्च ॥ २१ ॥

---

वेदिता चास्यार्थस्य शरीरस्य शिर इव राज्ञां उच्छ्रितहेतुर्भवति । तस्मात् एकविंशोऽग्निः कर्तव्यः । तत्र ब्रूमः करणीकारिकाः—

त्रिस्स्तानात्प्राकृतादग्नेराश्वमेधिक उच्यते ।
कुर्यात्पुरुषमानेषु तस्य त्रिकरणीं ततः ॥
चतुरश्रे समे क्षेत्रे प्रमाणं पुरुषो यथा ।
जानीयादक्ष्णया रज्जुं तस्य द्विकरणीं बुधः ॥
कर्णवर्गो यतो बाहुः कोटिवर्गावुभौ युतौ ।
विस्तारः पुरुषा यस्मिन् आयामो द्विकरण्यथ ।
अक्ष्णया रज्जुरेतस्य त्रिकरण्युपजायते ॥
करोति पुरुषस्थानस्थिता सप्तविधा तु सा ॥
तस्या एव चतुर्थांशश्चतुर्भागीयकल्पना ।
तस्यार्धेनैव तत्पादाः कल्पनीया विजानता ॥
तस्याः पञ्चमभागाद्यैः तद्भागीयादिकल्पना ॥

इति तैत्तिरीयब्राह्मणे तृतीये अष्टमे अश्वमेधे
एकविंशोऽनुवाकः.

[1]देवा वा अश्वमेधे पवमाने । सुवर्गं लोकं न प्राजानन् । तमश्वः प्राजानात् । यदश्वमेधेऽश्वेन मेध्येनोदञ्चो बहिष्पवमानꣳ सर्पन्ति । सुवर्गस्य लोकस्य प्रज्ञात्यै । [2]न वै मनुष्यस्सुवर्गं लोकमञ्जसा वेद । अश्वो वै सुवर्गं लोकमञ्जसा वेद । यदुद्गातोद्गायेत् । यथाऽक्षेत्रज्ञोऽन्येन पथा प्रतिपादयेत् । तादृक्तत् ॥ ८६ ॥ उद्गातारमपरुद्ध्य । अश्वमुद्गीथाय वृणीते । यथा क्षेत्रज्ञोऽञ्जसा नयति ।

---

[1]देवा वा अश्वमेध इत्यादि ॥ बहिष्पवमाने स्वर्गं लोकं नाजानन् देवाः स्वर्गसाधनमस्य रूपं नाजानन् इत्यर्थः । अश्वस्तु तं प्राजानात् तस्मात् अश्वेन सह अश्ववालमन्वारभ्य उदञ्चः सर्पन्ति बहिष्पवमानं तत्स्वर्गस्य प्रज्ञानाय भवति ॥

[2]न वा इत्यादि ॥ गतम् । अञ्जसा आर्जवेन । अक्षेत्रज्ञः क्षेत्राभियोगरहितः, स यथा अन्येन अनृजुना मार्गेण प्रतिपादयेत् अमार्गेण प्रस्थापयेत् क्लेशयति इष्टदेशं न प्रापयति तुल्यं तत् यत् बहिष्पवमानक्षेत्रे स्वर्गमार्गज्ञानविधुरो मनुष्य उद्गाता उद्गायेत्, तस्मान्मनुष्यमुद्गातारमपरुद्ध्य निर्वास्य अश्वं वृणीते उद्गीथाय उद्गातृकार्यार्थम् । औणादिकः थप्रत्ययः । यथेत्यादि । गतम् । समष्ट्यै ऋजुमार्गज्ञत्वादश्वस्य सम्यक् स्वर्गावाप्त्यै भवति ॥

एवमेवैनमश्वस्सुवर्गं लोकमञ्जसा नयति । पुच्छ-मन्वारभन्ते । सुवर्गस्य लोकस्य समष्ट्यै । [3]हिं करोति । सामैवाकः । हिं करोति । उद्गीथ एवास्य सः ॥ ८७॥ वडबा उप रुन्धन्ति । मिथुनत्वाय प्रजात्यै । अथो यथोपगातार उपगायन्ति । तादृगेव तत् । [4]उदगासीदश्वो मेध्य इत्याह । प्राजापत्यो वा अश्वः । प्रजापतिरुद्गीथः । उद्गीथमेवावरुन्धे । अथो ऋक्सामयोरेव प्रतितिष्ठति ।

---

[3]हिं करोतीति ॥ 'वडबा उपरुन्धन्ति' इति वक्ष्यति ता दृष्ट्वा यदश्वो हिं करोति हर्षेणाभिहिंकरोति सामैवैतत्करोति गानस्थानीयो हिंकारः । हिं करोतीति । परिगानादिसामव्यावृत्त्यर्थं पुनर्वचनम् । अस्य उद्गातृत्वेन वृतस्य उद्गीथः उद्गानस्थानीय एव हिंकारः । वडबा अश्वस्त्रियः उपरुन्धन्ति अश्वस्य समीपे दृष्टिपथे स्थापयन्ति मिथुनत्वाय मिथुनीभावाय, प्रजात्यर्थं च तद्भवति । अथो अपि उपरुद्धवडबा अश्वस्य हिंकारं श्रुत्वा यत् प्रत्यभिहिंकुर्वन्ति तदुद्गातॄणामुपगानस्थानीयम् ॥

[4]उदगासीदिति ॥ अयमश्वो मेधार्हे उदगासीत् उद्गानमकार्षीदिति हिंकारानन्तरमाह । 'यमरमनम' इति सक् । अश्वः प्राजापत्यः तद्देवत्यः उद्गीथः स्वयं प्रजापतिरेव लोकवृद्धिहेतुत्वात्, तस्मात् अश्वस्योदगासीदिति वचनेन प्रजापत्यात्मकमुद्गी-

[5]हिरण्येनोपाकरोति । ज्योतिर्वै हिरण्यम् । ज्योतिरेव मुखतो दधाति । यजमाने च प्रजासु च । अथो हिरण्यज्योतिरेव यजमानस्सुवर्गं लोकमेति॥

तथ्स उपाकरोति चत्वारि च ॥ २२ ॥

[1]पुरुषो वै यज्ञः । यज्ञः प्रजापतिः । यदश्वे

---

थमवरुन्धे । अथो अपि च ऋक्सामयोः सर्वासु ऋक्सामसु च प्रतिष्ठितो भवति यजमानः प्राजापत्योद्गीथलाभात् ॥

[5]हिरण्येनेति ॥ बहिस्स्थानस्थितहिरण्येन स्तोत्रमुपाकरोति आरम्भयति । मुखतः आरम्भतः प्रभृति यजमाने प्रजासु च ज्योतिर्दधाति । अपि च यजमानो हिरण्यज्योतिः हिरण्यसदृशज्योतिः हितरमणीयज्योतिर्वा स्वर्गं गच्छति ॥

इति तृतीये अष्टमे अश्वमेधे द्वाविंशोऽनुवाकः.

---

पुरुषो वा इति ॥ पुरुषः परमात्मा स एव स्वयं यज्ञः सर्वपरिस्पन्दाधारत्वात्, यज्ञः एव स्वयं प्रजापतिः प्राजापत्योश्वः प्रधानसाधनत्वात् । तथा सति यदश्वे यूपस्थानीये निश्चले पशून् पर्यङ्ग्यान् नियुञ्जन्ति तद्यज्ञादेव यज्ञमेवोपसंप्राप्य यज्ञं प्रयुङ्क्ते, यज्ञसाधनत्वात् पशवो यज्ञाः । प्राजापत्यस्यास्य अश्वस्य यज्ञत्वात् यज्ञ एव यज्ञः प्रयुक्तो भवति । ल्यब्लोपे पञ्चमी । अस्मिन् पक्षे 'पुरुषो वै यज्ञः' इत्यवक्तव्यं स्यात्,

पशून्नियुञ्जन्ति । यज्ञादेव तद्यज्ञं प्रयुङ्क्ते । [2]अश्वं तू-परं गोमृगम् । ताननग्निष्ठ आलभते । सेनामुखमेव तथ्सꣳश्यति । तस्माद्राजमुखं भीष्मं भावुकम् । [3]आग्नेयं कृष्णग्रीवं पुरस्ताल्ललाटे । पूर्वाग्निमेव तं कुरुते ॥ ८१ ॥ तस्मात्पूर्वाग्निं पुरस्तात्स्थापयन्ति । पौष्णमन्वश्वम् । अन्नं वै पूषा । तस्मात्पूर्वाग्नावा-

तस्मात् अन्यथा व्याख्यायते—'वाताद्यज्ञः प्रयुज्यताम्'* इति यज्ञात्सर्वयज्ञाधारात् पुरुषादुपादाय अश्वे यज्ञं प्रयुङ्क्ते । इदानीं यज्ञः प्रजापतिरित्यनेन किमिति चेत् यज्ञसाधनानां यज्ञत्वमनेन साधयति ॥

[2]अश्वादींस्त्रीनग्निष्ठे यूपे आलभते नियुनक्ति । सेनामुख-मिति । सेना बलं तस्य मुखं उपक्रमः तत्संश्यति तीक्ष्णी-करोति, तस्मात् संशितत्वात् बलादभिन्नत्वाच्च राज्ञो मुखं भीष्मं भयानकं भावुकं भवितुं शीलवत् । 'लषपतपद' इत्युकञ् । बिभेत्यस्मादिति भीष्मं 'भियष्षुग्वा' इति मक् ॥

[3]आग्नेयादयः छागाः ललाटे अश्वस्यालभत इति सर्वत्र । पुरस्तात् पूर्वभागे नासिकापुटयोरूर्ध्वं पुरस्ताद्भागे आग्नेयम् । पौष्णं तु अन्वश्वं तेनानुगतं ललाट एव । तस्मात् आह-वनीयं पूर्वस्यां दिशि स्थापयन्ति । पौष्णस्यान्नात्मनो ललाट एव नियोजनात् आहार्यं होतव्यं सर्वं पूर्वाग्नावेवाहरन्ति जुह्वति ।

* ब्रा. ३-७-४.

ह्यायैंमाहरन्ति । [4]ऐन्द्रापौष्णमुपरिष्टात् । ऐन्द्रो वै राजन्योऽन्नं पूषा । अन्नाद्येनैवैनमुभयतः परि गृह्णाति । तस्माद्राजन्योऽन्नादो भावुकः । [5]आग्नेयौ कृष्णग्रीवौ बाहुवोः । बाहुवोरेव वीर्यं धत्ते ॥ १० ॥ तस्माद्राजन्यो बाहुबली भावुकः । [6]त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः । सक्थ्योरेव वीर्यं धत्ते । तस्माद्राजन्य ऊरुबली भावुकः । [7]शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे । ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते । अथो

---

अत्र सर्वत्र उक्तस्थाननियोजनासंभवे तत्स्थानस्मृतिमात्रमेव कृत्वा अग्निष्वेव नियोजनम् ॥

[4]'उपरिष्टादिति ॥ ग्रीवाया उपरिभागे । केचिदाहुः 'ललाटप्रदेशमतीत्य ऊर्ध्वप्रदेशे' इति । तयोरन्नात्मनोः पौष्णयोर्मध्ये राजन्यात्मन ऐन्द्रस्य स्थितत्वात् अन्नाद्येनोभयतः परिगृह्णाति यजमानम् । तस्मात् राजन्यः समृद्धान्नादनशीलः ॥

[5]बाहुवोरिति ॥ तन्वादित्वादुवङ् ॥

[6]लोमशसक्थाविति ॥ लोमवदूरू । 'सक्थं चाक्रान्तात्' इत्यच् समासान्तः । सक्थ्योरिति । 'ई च द्विवचने' इतीकारः ॥

[7]शितिपृष्ठौ श्वेतपृष्ठौ । 'शितेर्नित्या बह्वच्' इत्युत्तरपदान्तोदात्तत्वम् । अथो अपि च कवचद्वयस्थानीयौ एतौ पशू अभितः उभयोः पार्श्वयोः पर्यूहते आमुञ्चते कवचद्वयं वा

कवचे एवैते अभितः पर्यूहते । तस्माद्राजन्यस्सन्नद्धो वीर्यं करोति । [8]धात्रे पृषोदरमधस्तात् । प्रतिष्ठामेवैतां कुरुते । अथो इयं वै धाता । अस्यामेव प्रति तिष्ठति । [9]सौर्यं बलक्षं पुच्छे । उथ्सेधमेव तं कुरुते । तस्मादुथ्सेधं भये प्रजा अभि सङ्श्रयन्ति ॥ ११ ॥

कुरुते धत्ते कुरुते पञ्च च ॥ २३ ॥

साङ्ग्रहण्या चतुष्टय्यो यो वै यः पितुश्चत्वारो यथा निक्तं प्रजापतये त्वा यथा प्रोक्षितं विभूराह प्रजापतिरकामयताश्वमेधेन प्रजापतिर्न किञ्च न सावित्रमाब्रह्मन्प्रजापतिर्देवेभ्यः प्रजापती रक्षाꣳ-

---

सर्वशरीरे पर्यूहते अध्यूहते तद्वीर्यं वीरकर्म शत्रुनिग्रहादि करोति ॥

[8]पृषोदरं श्वेतबिन्दुचितोदरं, 'उदराश्वेषुषु' इत्युत्तरपदान्तोदात्तत्वम्, 'पृषोदरादीनि यथोपदिष्टम्' इति व्यञ्जनलोपः । अधस्तादिति उदरे । प्रतिष्ठामिति अधोभागसाम्यात् । गतमन्यत् ॥

[9]बलक्षं वलक्षं श्वेतं श्वेताक्षमिति । अश्वस्योत्सेधमुच्छ्रितत्वं उच्छ्रितसौर्यसम्बन्धेन करोति सर्वभयनिवृत्तिसामर्थ्यमश्वस्य यथा

सि प्रजापतिमीप्सति विभूर्श्वनामान्यम्भाꣳस्ये- कयूपो राज्जुदालमेकविꣳशो देवाः पुरुषस्त्रयोविꣳ- शतिः ॥ २३ ॥

साकृह्णया तस्मादश्वमेधयाजी यत्परिमिता यद्यज्ञमुखे यो दीक्षां देवानेव त्रयं इमे सितायं प्राणापानावेवास्मिन्तस्माद्राजन्यं एकनवतिः॥ ९ १

हरिः ओम् तत्सत्.

---

स्यादिति । तस्मात् उत्सेधस्य भयनिवृत्तिहेतुतया श्रुतिप्रतिपादितत्वात् अद्यापि भये परचक्रादौ समुपस्थिते उत्सेधं उच्छ्रितं पर्वतादिकं प्रजाः भयनिवृत्तये अभिसंश्रयन्ति आभिमुख्येन भजन्ते ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये तैत्तिरीयब्राह्मणे तृतीयेऽष्टके अष्टमप्रपाठके अश्वमेधे त्रयोविंशोऽनुवाकः.

समाप्तश्च प्रपाठकः.



श्रीः.

# अथ नवमप्रपाठकः.

हरिः ओम्.

[1]प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोऽपाक्रामत् । तमष्टादशिभिरनु प्रायुङ्क्त । तमाप्नोत् । तमाप्त्वाऽष्टादशिभिरवारुन्ध । यदष्टादशिनं आलभ्यन्ते । यज्ञमेव तैराप्त्वा यजमानोऽवरुन्धे । संवथ्सरस्य वा एषा प्रतिमा । यदष्टादशिनः । द्वादश मासाः पञ्चर्तवः ॥ १ ॥ संवथ्सरोऽष्टादशः ।

---

[1]प्रजापतिरश्वमेधमित्यादि ॥ प्रजापतिसृष्टोऽश्वमेधः तत्सकाशात् अपाक्रामत अपागच्छत् । अथ प्रजापतिः तमश्वमेधं अनु लक्षीकृत्य अष्टादशिभिः प्रायुङ्क्त अष्टादशिनामग्नौ प्रक्षेपलक्षणं अनन्तरप्रयोगं कृतवान् । अष्टादश परिमाणमेषामित्यष्टादशिनः 'शञ्छतोर्डिनिः' इति डिनिप्रत्ययः । 'रोहितो धूम्ररोहितः'* इत्यादिभिः दशभिरनुवाकैः उक्ताः अशीत्यधिकं शतमष्टादशिनः । तैः तं अश्वमेधं आप्त्वा पुनरपि तैः अष्टादशिभिः तमश्वमेधं अवारुन्ध विधेयीकृत्यात्मसमीपे स्थापितवान् । यदित्यादि । गतम् । संवत्सरस्येति प्रतिमा प्रतिच्छन्दः ।

---

*सं. ५-६-११.

यदंष्टादृशिनं आलुभ्यन्तें । संवथ्सुरमेव तैराप्त्वा यजमानोऽवरुन्धे । [2]अग्निष्ठेंऽन्यान्पशूननुपाकरोति । इतरेषु यूपेष्वष्टादशिनोऽजामित्वाय । नवंनवालं-भ्यन्ते सवीर्यत्वाय । [3]यदाऽऽरण्यैस्संस्थापयेत् । व्यवंस्येतां पितापुत्रौ । व्यध्वानः क्रामेयुः । विदूरं

कथमित्याह—द्वादशेति । मासाः द्वादश ऋतवः पञ्च हेमन्तशिशिरयोरेकत्वात्, समुदायात्मा संवत्सर एकः, एवमष्टादशसंख्यान्वयात् संवत्सरस्य प्रतिमा । तस्मात् अष्टादशभिः संवत्सरस्यैवाप्तिरवरोधश्च भवति ॥

[2]अग्निष्ठेऽन्यानिति ॥ अन्यान् अष्टादशव्यतिरिक्तान् ग्राम्यान् पशून् अग्निष्ठे अग्निसमीपस्थे मध्यमयूपे उपाकरोति । अथ इतरेषु विंशतौ अष्टादशिनः उपाकरोति अजामित्वाय अनालस्याय तद्भवति कृतकरणाभावात् । नवनवेति । अष्टादश पशून् नव नव प्रतिविभज्य अग्निष्ठस्योत्तरे यूपे नव आलभ्यन्ते अथ दक्षिणे नव, पुनरग्निष्ठस्य दक्षिणदक्षिणे नव, उत्तरोत्तरे च नव । एवं व्यत्यासेन आदशमात् । सवीर्यत्वाय समानवीर्यत्वाय यूपानां तद्भवति । 'समानस्य छन्दसि' इति सभावः ॥

[3]यदाऽऽरण्यैरिति ॥ यदाऽऽरण्यैः पशुभिः संस्थापयेत् यागान्तं कर्म समापयेत् तदा तेषां विरुद्धस्वभावत्वात् अत्यन्तसंश्लिष्टौ पितापुत्रावपि अस्य राज्ये व्यवस्येतां विरुद्धाध्यवसायौ स्याताम् । अध्वानश्च विक्रामेयुः अध्ववर्तिनो जनाः अध्वानः

ग्रामयोर्ग्रामान्तौ स्याताम् ॥ २ ॥ ऋक्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अरण्येष्वाजायेरन् । 'तदाहुः । अपशवो वा एते । यदारण्याः । यदारण्यैस्सꣳस्थापयेत् । क्षिप्रे यजमानमरण्यं मृतꣳ हरेयुः । अरण्यायतना ह्यार-

तात्स्थ्यात् ताच्छब्द्यं, मञ्चाः क्रोशन्तीतिवत्, ते विरुद्धं क्रामयेयुः परस्परस्य बाधका भवेयुः तादृशत्वादारण्यानामपि । विदूरमिति द्वयोः ग्रामयोः द्वौ ग्रामान्तौ ग्रामसीमानौ ग्रामयोर्विदूरं यथा तथा स्याताम् प्रवर्तेयाताम् अरण्यप्रायत्वेनानावृतत्वात् निजसीमातिक्रमेण वृत्तेः । यथा द्वयोरेवं सर्वेषामिति तेन पुनर्ग्रामग्रहणम् । ऋक्षीकादयो हिंस्रजन्तवः । त एवारण्येष्वाजायेरन् सर्वतो जायेरन्, न तु मृगवानरतापसमयूरादयः । पुंव्याघ्राः पुरुषव्याघ्राः । परिमोषिणो मार्गचोराः । आव्याधिन्यः सर्वतस्ताडयित्र्यस्सेनाः, या गणशो वर्तमानाः हिंसन्ति 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् । तस्कराः मायाविनो हर्तारः 'तद्बृहतोः' इति सुट् ॥

'तदाहुरिति ॥ तत्र आरण्यसंस्थापनायां दोषान्तरमप्याहुः । अपशवः पशुकार्याकरणाद्धारण्याः । तस्मात् आरण्यसंस्थापनायां पशुयागो न कृत इति वृथा आरण्यपशुहिंसाकारिणं क्षिप्रे काले मृतं यजमानं अरण्यं हरेयुः प्रापयेयुः । अरण्यस्थाना ह्यारण्याः पशवो भवन्ति । आरण्यपशुयाजिनो यजमानस्य इदमेव फलं

ण्याः प॒शव॒ इति॑ । यत्प॒शून्नाल॒भेत॑ । अन॑वरुद्धा अ॒स्य प॒शव॑स्स्युः । यत्पर्य॑ग्निकृतानु॒थ्सृ॒जेत् ॥ ३ ॥ य॒ज्ञ॒वे॒श॒सं कु॑र्यात् । [5]यत्प॒शू॒ना॒ल॒भ॑ते । तेनै॒व प॒शूनव॑रुन्धे । यत्पर्य॑ग्निकृतानु॒थ्सृ॒जत्यय॑ज्ञवेशसाय । अव॑रुद्धा अ॒स्य प॒शवो॒ भव॑न्ति । न य॑ज्ञवेश॒सं भ॑वति । न यज॑मान॒मर॑ण्यं मृ॒तश्च॒ ह॑रन्ति । ग्रा॒-

स्यात् । यत्पशूनिति । अथ यद्यारण्यानां पशूनां आलम्भ एव न क्रियते आलभ्य तैस्संस्थापने दोषो भवति चेद्वरमनालम्भ एवेति भावः । तन्न सुन्दरमित्याह—अनवरुद्धा इति । आलम्भनमात्रमकुर्वाणस्य अस्य यजमानस्य आरण्याः पशवोऽनवरुद्धा अविधेयास्स्युः । यदित्यादि । गतम् । अथ मतं आलभ्यैवारण्याः पशवः पर्यग्निकरणानन्तरमुत्स्रष्टव्याः, तत उभयथापि दोषप्रसक्तिर्न भविष्यतीत्याक्षिपति । यज्ञवेशसमिति । यागार्थमालम्भनं, तत्रालब्धानामयागं कुर्वन् यज्ञविनाशकार्येव स्यात् । कुतस्त्यमिदं पूर्वापरविप्रतिषिद्धं प्रयोगज्ञानमिति भावः । वेशशब्दात् 'अनसन्तान्नपुंसकात्' इत्यच् समासान्तः ॥

[5]समाधत्ते—यदिति ॥ आलब्धव्यास्तावदारण्याः पशवः तेन पशवोऽवरुध्यन्ते । अथ यत्पर्यग्निकृतानुत्सृजति पर्यग्निकरणं कृत्वैव, न त्वालम्भनानन्तरं, तदयज्ञवेशसाय भवति पर्यग्निकरणव्याजेन अग्नावेवैते हूयन्ते इति नालब्धायागदोषप्रसङ्ग इति भावः । तस्मादालम्भात् अवरुद्धाः पशवो भवन्ति । याग-

म्यैस्सꣳस्थापयति । एते वै पशवः क्षेमो नाम । सं पितापुत्राववस्यतः । समध्वानः क्रामन्ति । समन्तिकं ग्रामयोर्ग्रामान्तौ भवतः । नर्क्षीकाः पुरुषव्याघ्राः परिमोषिण आव्याधिनीस्तस्करा अरण्येष्वाजायन्ते ॥ ४ ॥

ऋतवस्स्यातामुथ्सृजेथ्स्यतस्त्रीणि च ॥ १ ॥

[1]प्रजापतिरकामयतोभौ लोकाववरुन्धीयेति । स एतानुभयान्पशूनपश्यत् । ग्राम्याꣳश्चारण्याꣳ-

स्य च कृतत्वान्न यज्ञवेशसं भवति । आरण्यैरसंस्थापनात् न यजमानस्य मृतत्वं, आरण्यानामहिंसितत्वात् न चास्यारण्यैर्हरणं, अनारण्ययाजित्वात् । न च कर्मणः संस्थाशून्यता ग्राम्यैः पशुभिः क्षेमहेतुभिः संस्थापनात् । ततश्च पितापुत्रौ समवस्यतः संगतमविरुद्धमेवावस्यतः अविप्रतिषिद्धमती भवतः । अध्वानश्च संक्रामन्ति अध्वचारिणस्सम्यक् निर्बाधं चरन्ति । ग्रामयोश्च ग्रामान्तौ संगतान्तिकं यथा तथा भवतः प्रत्यासन्नावेव भवतः श्रद्धेयत्वेनावृतत्वात् । ऋक्षीकादयश्च हिंस्राः अरण्येष्वपि नैव जायन्ते ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके नवमप्रपाठके प्रथमोऽनुवाकः.

---

[1]प्रजापतिरकामयतेत्यादि ॥ गतम्* ॥

* ब्रा. ३-९-१.

श्वं । तानालभत । तैर्वै स उभौ लोकाववारुन्ध । ग्राम्यैरेव पशुभिरिमं लोकमवारुन्ध । आरण्यैरमुम् । यद्ग्राम्यान्पशूनालभते । इममेव तैर्लोकमवरुन्धे । यदारण्यान् ॥५॥ अमुं तैः । [2]अनवरुद्धो वा एतस्य संवथ्सर इत्याहुः । य इतइतश्चातुर्मास्यानि संवथ्सरं प्रयुङ्क्त इति । एतावान् वै संवथ्सरः । यच्चातुर्मास्यानि । यदेते चातुर्मास्याः पशव आलभ्यन्ते । प्रत्यक्षमेव तैस्संवथ्सरं यजमानोऽवरुन्धे । [3]वि वा एष प्रजया पशुभिर् ऋ-

---

[2]अनवरुद्ध इति ॥ अविधेयीकृतोऽस्य संवत्सर इत्याहुः पुराविदः । कस्य? य इतइतः अर्वागेव स्थापयित्वा यज्ञाङ्गतामनीत्वा चातुर्मास्यानि चातुर्मास्यपशून् अनालभ्य संवत्सरं संवत्सरसाध्यं संवत्सरात्मकं कर्म वा प्रयुङ्क्ते चातुर्मास्यात्मा हि संवत्सरः तैर्व्याप्तत्वात् । इतइति वर्जनवाची निपात इति केचित् । 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया । चातुर्मास्यालम्भे प्रत्यक्षमव्यवधानेनैव संवत्सरोऽवरुद्धो भवति । कृष्णग्रीवादयस्संचराः संचरात्मकाः चातुर्मास्यपशवः पञ्चत्रिंशदधिकं शतम् ॥

[3]वि वा एष इत्यादिरैकादशिनानां विधिः ॥ प्रजया पशुभिश्चायं व्यृद्धो विहीनो भवति । कः? यः संवत्सरसाध्यं प्रयुङ्क्ते ब्रह्मचर्यरक्षणात् प्रजाव्यृद्धिः । प्रत्यवेक्षणाद्यभावात् पशु-

ह्वयते । यस्संवथ्सरं प्रंयुङ्क्ते । संवथ्सरस्सुवर्गो लोकः ॥ ६ ॥ सुवर्गं तु लोकं नापराध्नोति । प्रजा वै पशव एकादशिनी । यदेत ऐकादशिना: पशव आलभ्यन्ते । साक्षादेव प्रजां पशून् यजमानोऽवरुन्धे । [4]प्रजापतिर्विराजमसृजत । सा सृष्टाऽश्वमेधं प्राविशत् । तां दशिभिरनु प्रायुङ्क्त । ताम-

व्यृद्धिः । ननु प्रजापशुहीनस्य स्वर्गाख्या वृद्धिस्स्यादित्याह—संवत्सर इति । स्वयं स्वर्ग एव संवत्सरात्मकं कर्म तद्धेतुत्वात्, तस्मात् स्वर्गं लोकं तु नापराध्नोति न भ्रेषयति । प्रजापशुव्यृद्धिरेव । तत्र कस्समाधिरित्याह—प्रजा वा इति । एकादशिनी नाम स्वयं प्रजा पशवश्च तत्साधनत्वात् । तस्मात् ऐकादशिनानां पशूनां आलम्भनेन साक्षात् अव्यवधानेन प्रजां पशूंश्चावरुन्धे यजमानः । एकादश परिमाणमस्याः यूपरीतेः एकादशिनी 'शन्छतोर्डिनिः' तत्सम्बन्धिनः पशवः ऐकादशिनः द्वये भवन्ति प्राकृताः आश्वमेधिकाश्च । प्राकृताः आग्नेयादिवारुणपर्यन्ता एकादश* । आश्वमेधिकाः 'अग्नयेऽनीकवते रोहिताञ्जिः'† इत्याद्या एकादश ॥

[4]प्रजापतिरित्यादि ॥ विराट् अन्नं, सा सृष्ट्यनन्तरमेवाश्वमेधं प्राविशत् अश्वमेधमनुप्रविश्य तिरोहिता अभवत् । अथ

*सं. ५-५-२२. †सं. ५-५-२४.

प्रोत् । तामाप्त्वा दशिभिरवारुन्ध । यद्दशिनं आलभ्यन्ते ॥७॥ विराजमेव तैराप्त्वा यजमानोऽवरुन्धे । [5]एकादशदशात आलभ्यन्ते । एकादशाक्षरा त्रिष्टुप् । त्रैष्टुभाः पशवः । पशूनेवावरुन्धे । [6]वैश्वदेवो वा अश्वः । नानादेवत्याः पशा-

प्रजापतिस्तां विराजमनु लक्षीकृत्य दशिभिः पशुभिः प्रायुङ्क्त प्रयोगमुपलक्षणं कृतवान् । दश परिमाणं एषां इति दशिनः । पूर्ववत् डिनिः । 'इन्द्राय राज्ञे सूकरः'* इत्येकादशभिरनुवाकैः उक्ताः दशिनः एकादशाधिकं शतं पशवः । यदित्यादि । गतम् ॥

[5]एकादशदशात इति ॥ दशानां वर्गो दशत् 'पश्चद्दशतौ वर्गे वा' इति निपात्यते । ननु 'इन्द्राय राज्ञे'* इत्यनुवाके एकादश पशवः, तत्कथं दशत्स्यात्, ततश्च एकादशदशतः कथं स्युः । भूयसा व्यपदेशो भवतीति ज्ञापयतीति मन्तव्यम् । अवयवधर्मेण समुदायो व्यपदिश्यत इति वा । यद्वा—अवयवसंख्या एव समुदाये वर्तन्त इति एतदनेन व्युत्पादयति । तेन 'त्रिभिर्गार्हपत्यमादधाति । पञ्चभिराहवनीयम् । अष्टौ संपद्यन्ते'† इत्याद्युपपन्नं भवति । पञ्चैव हि तत्राक्षराणि । एकादशाक्षरेत्यादि । गतम् । त्रिष्टुप् छन्दः उत्सादिः ॥

[6]वैश्वदेवो वा इत्यादि ॥ विश्वे देवाः अस्य देवताः । अस्य प्राजापत्यत्वात् देवतैक्येन तदभेदोपचारात् सर्वे पशवोऽश्वो भव-

* सं. ९-९-११. † ब्रा. १-१-९.

वौ भवन्ति । अश्वस्य सर्वत्वाय । नानारूपा भवन्ति । तस्मान्नानारूपाः पशवः । बहुरूपा भवन्ति । तस्माद्बहुरूपाः पशवस्समृद्ध्यै ॥ ८ ॥

आरण्यान्लोको दशिनं आलभ्यन्ते नानारूपाः पशवो द्वे च ॥ २ ॥

[1]अस्मै वै लोकाय ग्राम्याः पशव आलभ्यन्ते । अमुष्मा आरण्याः । यद्ग्राम्यान्पशूनालभते ।

ति । अथ नानारूपाः पशवो भवन्ति यथा कश्चित् बभ्रुः कश्चित् कृष्ण इति, तस्मात् अद्यापि नानारूपाः पशवो भवन्ति । अथ बहुरूपाः एकस्याः देवतायाः बहुभेदभिन्नरूपाः पशवो भवन्ति यथा प्राजापत्या एव—कश्चित् रोहितः कश्चित् धूम्ररोहितः इति, तस्मात् अद्यापि पशवो बहुरूपा भवन्ति । यथा एकस्यैव पशोः कश्चिदनयनः कृष्णः कश्चिल्लोहितः कश्चिच्छुक्लः इति । 'बहोर्नञ्वत्' इति नञ्वद्भावात् 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

इति तैत्तिरीयब्राह्मणे तृतीये नवमे अश्वमेधे
द्वितीयोऽनुवाकः.

[1]अस्मै वा इत्यादि ॥ गतम्* । यद्दारण्यानिति आलभन्तें इत्येव । अमुं तैरिति । अवरुन्ध इत्येव । एवमन्यतरा-

* ब्रा. ३-९-२.

इममेव तैर्लोकमवरुन्धे । यदारण्यान् । अमुं तैः। उभयान्पशूनालंभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयोर्लोकयोरवरुद्ध्यै । उभयान्पशूनालभते ॥ ९ ॥ ग्राम्याꣳश्चारण्याꣳश्च। उभयस्यान्नाद्यस्यावरुद्ध्यै। उभयान्पशूनालभते। ग्राम्याꣳश्चारण्याꣳश्च। उभयेषां पशूनामवरुद्ध्यै। [2]त्रयस्त्रयो भवन्ति । त्रय इमे लोकाः। एषां लोकानामाप्त्यै। [3]ब्रह्मवादिनो वदन्ति । कस्माथ्सत्यात् ॥ १० ॥ अस्मिन्लोके बहवः कामा इति । यथ्समानीभ्यो देवताभ्योऽ-

लम्भे अन्यतरावरोधः उभयालम्भेनोभयावरोधः । फलान्तरविधानार्थं द्वितीयं तृतीयं च विदधाति । उभयालम्भनेन ग्राम्यारण्यात्मकस्योभयस्य अन्नस्य अवरोधः, उभयेषां पशूनां अवरोधश्च ॥

[2]त्रयस्त्रय इति ॥ एकैकस्यै देवतायै त्रयस्त्रयः पशवो भवन्ति। यथा रोहितादयस्त्रयः प्राजापत्याः बभ्र्वादयस्त्रयो रौद्राः तिस्रः कृष्णा वशा वारुण्य इत्यादि । तस्त्रित्वान्त्रयात् लोकत्रयाप्त्यै भवति ॥

[3]ब्रह्मवादिन इत्यादि ॥ कस्मात् कारणात् अस्मिन् मनुष्यलोके एकैकस्य पुरुषस्य बहवः कामा रुचयो भवन्ति? इति ब्रह्मवादिनः पृच्छन्ति, उत्तरं—यदित्यादि । समानीभ्यो

न्येऽन्ये पशव आलभ्यन्ते । अस्मिन्नेव तल्लोके कामान्दधाति । तस्मादस्मिन्लोके बहवः कामाः । [4]त्रयाणां त्रयाणाꣳ सह वपा जुहोति । त्र्यावृतो वै देवाः । त्र्यावृत इमे लोकाः । एषां लोकानामाप्त्यै । एषां लोकानां क्लृप्त्यै । [5]पर्यग्निकृतानारण्यानुत्सृजन्त्यहिꣳसायै ॥ ११ ॥

अवरुद्ध्या उभयान्पशूनालभते
सत्यादहिꣳसायै ॥ ३ ॥

देवताभ्यः एकैकस्यै देवतायै अन्येऽन्ये पृथक्स्वभावाः पशव आलभ्यन्ते, यथा एकस्मै प्रजापतये रोहितादयस्त्रयः, तेनायमस्मिन् लोके बहून् कामान् दधाति स्थापयति यजमानः। तस्मात् अद्यत्वेऽपि बहवः कामा भवन्ति ॥

[4]त्रयाणां त्रयाणामिति ॥ एकदेवत्यानां प्राजापत्यादीनाम् । त्र्यावृत इत्यादि । व्याख्यातम्* ॥

[5]पर्यग्निकृतानिति विहितस्यानुवादः अहिंसाया इति हेतुकथनार्थः ॥

इति तैत्तिरीयब्राह्मणे तृतीये नवमे प्रपाठके
अश्वमेधे तृतीयोऽनुवाकः.

---

*मा. ३-८-१०.

[1]युञ्जन्ति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरन्तमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परितस्थुष इत्याह ॥ १२ ॥ इमे वै लोकाः परितस्थुषः । इमानेवास्मै लोकान् युनक्ति । [2]रोचन्ते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति । युञ्जन्त्यस्य काम्येत्याह । कामानेवास्मै युनक्ति । हरी विपक्षसेत्या-

---

[1]युञ्जन्ति ब्रध्नमिति दक्षिणस्यां युगधुरि अश्वमलंकृतं युनक्ति ॥ असौ वा इत्यादि । ब्रध्नत्वादिगुणयोगादादित्यादियोजनत्वेन अश्वयोजनं रूपयति । अस्मै यजमानाय आदित्यादिमानयं यथा स्यादिति । एतदर्थमेवादित्यादीन् स्वकार्येषु व्यापारयतीत्यर्थः । बृंहणात् ब्रध्नः आदित्यः । आरोचनादरुषोऽग्निः । सदा चरणात् चरन् वायुः । परितः स्थितियोगात् परितस्थिवांसो लोकाः, विभक्तिव्यत्ययः ॥

[2]रोचन्त इति पृष्ठमश्वस्य मृज्यते ॥ एतदर्थमेव दिवि नक्षत्राणि रोचयति प्रकाशयति । युञ्जन्त्यस्येति षष्ठी युनक्ति। कामान् अभिप्रेतानर्थान् । इमे इयं च असौ च इमे द्यावापृथिव्यौ । 'त्यदादीनां यत्परम्' इतीदमश्शेषः । हरी हर-

ह । इमे वै हरी विपक्षसा । इमे एवास्मै युनक्ति ॥ १३ ॥ शोणा धृष्णू नृवाहसेत्याह । अहोरात्रे वै नृवाहसा । अहोरात्रे एवास्मै युनक्ति । एता एवास्मै देवता युनक्ति । सुवर्गस्य लोकस्य समष्ट्यै। [3]केतुं कृण्वन्नकेतव इति ध्वजं प्रतिमुञ्चति । यश एवैनꣳ राज्ञां गमयति । जीमूतस्येव भवति प्रतीकमित्याह । यथायजुरेवैतत् । ये ते पन्थानस्सवितः पूर्व्यास इत्यध्वर्युर्यजमानं वाचयत्यभिजित्यै ॥१४॥ [4]परा वा एतस्य यज्ञ एति । यस्य

णकुशले । विपक्षसा विविभपार्श्वे । धृष्णू धारणशीले नृवाहसा नराणां वहनकुशले । एवमेता देवता अस्मै यजमानाय अस्याभिमतसंपादनार्थं युनक्ति अश्वादियोजनव्याजेन, तत्स्वर्गस्य सम्यक्प्राप्तये भवति ॥

[3]प्रतिमुञ्चति रथे स्थापयति ॥ राज्ञां मध्ये एनमेव राजानं यशो गमयति जयत्येष इति यावत् । प्रसिद्धत्वात् यथायजुरिति । 'अनाविद्धया तनुवा जयत्वम्'* इत्यादि यथा मन्त्रो वदति तथा तद्भवत्येव । अभिजित्या इति । मार्गविशेषलाभात् देवतापक्षपाताच्च अभिजयः ॥

[4]परा वा इत्यादि ॥ उपाकृतोऽश्वो हविर्भूतो वेध्या अ-

*सं. ४-६-६.

पशुरुपाकृतोऽन्यत्र वेद्या एति । एतꣳ स्तोतरेतेन पथा पुनरश्वमावर्तयासि न इत्याह । वायुर्वै स्तोता । वायुमेवास्य परस्ताद्दधात्यावृत्यै । [5]यथा वै हविषो गृहीतस्य स्कन्दति । एवं वा एतदश्वस्य स्कन्दति । यदस्योपाकृतस्य लोमानि शीयन्ते । यद्वालेषु काचानावयन्ति । लोमान्येवास्य तथ्सं-

न्यत्र यदि गच्छेत् एतस्य यजमानस्य यज्ञः परैति विनश्यति, तस्मात् 'एतम्' इति रथसमीपमश्वं नयति । तत्र 'एतं स्तोतः' इत्यादिवचनात् अश्वस्य पश्चाद्वायुस्स्थापितो भवति, तत्त्वास्य आवृत्यै भवति । वायुः खलु 'स्तोतः' इति मन्त्रे आमन्त्र्यते प्राणादिवृत्तिभावेन ताल्वाद्यभिघातेन शब्दोत्पादनात् स्तोता शब्दयिता वायुः उच्यते ॥

[5]यथा वा इत्यादि ॥ उपाकरणोत्तरकालं अश्वस्य लोम निपतनं गृहीतस्य हविषः स्कन्दनस्थानीयं, तस्मात् वालेषु अश्वस्य दीर्घलोमसु काचान् मणीन् सौवर्णराजतमौक्तिकान् महिषीवावातापरिवृक्त्य आवयन्ति प्रोतान् कुर्वन्ति । तत्सर्वेषां लोम्नां संभरणाय सम्यग्धारणाय भवति—

सौवर्णान् महिषी मणीन् दशशतानस्यावयत्यावहात्
वावाता वयते मणीन् दशशतान् प्रत्यग्रहाद्राजतान् ।
प्रत्यक्श्रोणि सहस्रमेव परिवृक्तस्यस्यावयेन्मौक्तिकान्
सव्यदशाङ्कमणीनथैषु सद्मपद्मशस्यविशस्तये ॥

भरन्ति ॥१५॥ [6]भूर्भुवस्सुवरिति प्राजापत्याभि-रावयन्ति । प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्धयन्ति । भूरिति महिषी । भुव इति वावाता । सुवरिति परिवृक्ती । एषां लोकानामभिजित्यै । [7]हिरण्ययाः काचा भवन्ति । ज्योतिर्वै हिरण्यम् । राष्ट्रमश्वमेधः ॥१६॥ ज्योतिश्चैवास्मै राष्ट्रं च समीची दधाति । सहस्रं भवन्ति । सहस्रसंमितस्सुवर्गो लोकः । सुवर्गस्य लोक-

महिष्यास्सखिवत्स्थाने राजपुत्र्यश्शत स्मृताः ।
वावातायाः अराजोग्रशरास्सहायके शतम् ॥
शरास्तु सूतग्रामण्यां परिवृक्तस्यान्महायताम् ।
शतं कुर्वन्ति पञ्चाशत् पञ्चाशद्वर्गयोर्द्वयोः ॥

[6]भूरित्यादि ॥ 'स भूरिति व्याहरत्'* इति प्रजापतिना प्रथमदृष्टत्वात् प्राजापत्या व्याहृतयः अश्वः प्राजापत्य इति स्वयैव देवतया आवनं समृद्ध्यै भवति । महिष्यादित्रयस्य क्रमेण व्याहृतित्रयान्वयो लोकत्रयाभिजयाय भवति ॥

[7]हिरण्ययाः हिरण्मयाः 'ऋत्व्यवास्त्व्य' इति सूत्रे हिरण्ययेति निपात्यते । पक्षान्तरमिदं राजतानामप्युपलक्षणं वा । समीची संगते एकविषये दधाति । मणीनां सहस्रत्वं महार्घत्वेन सहस्रतुल्यस्य स्वर्गस्य अभिजयाय भवति ॥

*ब्रा. २-२-४.

स्याभिजित्यै । [8]अप वा एतस्मात्तेजं इन्द्रियं पशवश्श्रीः क्रामन्ति । योऽश्वमेधेन यजते । वसवस्त्वाऽञ्जन्तु गायत्रेण छन्दसेति महिष्यभ्यनक्ति । तेजो वा आज्यम् । तेजो गायत्री । तेजसैवास्मै तेजोऽवरुन्धे ॥ १७॥ रुद्रास्त्वाऽञ्जन्तु त्रैष्टुभेन छन्दसेति वावाता । तेजो वा आज्यम् । इन्द्रियं त्रिष्टुप् । तेजसैवास्मा इन्द्रियमवरुन्धे । आदित्यास्त्वाऽञ्जन्तु जागतेन छन्दसेति परिवृक्ती । तेजो वा आज्यम् । पशवो जगती । तेजसैवास्मै पशूनवरुन्धे । पत्नयोऽभ्यञ्जन्ति । श्रिया वा एतद्रूपम् ॥ १८॥ यत्पत्नयः । श्रियमेवास्मिन्तद्दधाति । ना-

[8]अप वा इत्यादि ॥ अश्वमेधेन यजमानात्तेजआदिचतुष्टयमपक्रामति दीर्घकालं राज्यपरित्यागात् । तत्र च 'वसवस्त्वा'* इत्यादिभिरञ्जनं चतुष्टयलाभाय भवति । सहोत्पत्त्यादिना तेजआदेर्गायत्र्यादेश्च अभेद उपचर्यते । 'तेजो वा आज्यम्' इति वाक्यशेषात् आज्येनाभ्यञ्जन्तीति गम्यते । तस्य च तेजोहेतुत्वात्तेजस्त्वम् । पत्नय इति । छान्दसं ह्रस्वत्वम् । श्रीवृद्धिहेतुत्वात्पत्नीनां श्रीत्वम् ॥

* सं. ७-४-२०.

स्मात्तेजं इन्द्रियं पशवश्श्रीरपकामन्ति। [9]लाजी ३-ञ्छाची३न् यशो ममाँ४ इत्यतिरिक्तमन्नमश्वायो-पाहरन्ति। प्रजामेवान्नादीं कुर्वते। एतद्देवा अन्न-मत्तैतदन्नमद्धि प्रजापत इत्याह। प्रजायामेवान्ना-द्यं दधते। यदि नावजिघ्रेत्। अग्निः पशुरासी-दित्यन्नंघ्रापयेत्। अव हैव जिघ्रति। [10]आक्रान्-वाजी क्रमैरत्यक्रमीद्वाजी द्यौस्ते पृष्ठं पृथिवी स-धस्थमित्यश्वमनुमन्त्रयते। एषां लोकानामभि-जित्यै। समिद्धो अञ्जन्कृदरं मतीनामित्यश्वस्या-प्रियो भवन्ति सरूपत्वाय ॥ ११ ॥

परितस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै भरन्त्यश्वमेधो रुन्धे रूपं जिघ्रति त्रीणि च ॥४॥

---

[9]अतिरिक्तमिति ॥ नक्तहोमशेषं यन्निहितं तदन्नमश्वाय पत्न्य उपाहरन्ति समीपे दधति भक्षणार्थम्। सर्वा प्रजामन्नादनस मर्था कुर्वते सर्वस्यामपि प्रजायां प्रभूतं अन्नाद्यं स्थापयति एतन्मन्त्रप्रभावात्। यदि नेति। उपाहृतमन्नमिति केचित्। उपपाद्यमाना अप इत्यन्ये। एतन्मन्त्रप्रभावात् अवजिघ्रत्येव ॥

[10]अनुमन्त्रयत इति॥ अन्नोपहरणानन्तरम्। आप्रिय इति प्रयाजानां याज्याः, आप्रीतिहेतुत्वादाप्रियः। सरूपत्वाय समानरूपत्वाय भवन्ति॥

इति तृतीये नवमे अश्वमेधे चतुर्थोऽनुवाकः.

[1]तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते । योऽश्वमेधेन यजते । होता च ब्रह्मा च ब्रह्मोद्यं वदतः । तेजसा चैवैनं ब्रह्मवर्चसेन च समर्धयतः । [2]दक्षिणतो ब्रह्मा भवति । दक्षिणत आयतनो वै ब्रह्मा । बार्हस्पत्यो वै ब्रह्मा । ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति । तस्माद्दक्षिणोऽर्धो ब्रह्मवर्चसितरः । उत्तरतो होता भवति ॥ २० ॥ उत्तरत आयतनो वै होता । आग्नेयो वै होता । तेजो वा अग्निः । तेज एवास्योत्तरतो दधाति । तस्मादुत्त-

---

[1]तेजसा वा इत्यादि ॥ भीष्मस्वभावत्वात् । ब्रह्मोद्यमिति । ब्रह्मणो वादो ब्रह्मोद्यं प्रश्नप्रतिज्ञारूपेण वेदार्थाध्यवसायः । 'वदस्सुपि क्यप् च' इति क्यप् । तत्राश्वमेधस्य प्राशस्त्यसमर्थतया यजमानस्य तेजोब्रह्मवर्चसयोः समृद्धिं कुरुतो ब्रह्मोद्यं वदन्तौ होतृब्रह्माणौ ॥

[2]दक्षिणत इत्यादि ॥ वक्ष्यति 'यूपमभितो वदतः' इति। तत्राग्निष्ठस्य यूपस्य दक्षिणतो ब्रह्मा आसीनो वदति । उत्तरत आसीनो होता वदति । वेद्या दक्षिणतः ब्रह्मणस्स्थानं, उत्तरतो होतुः । बृहस्पतिप्रधानत्वात्तद्वत् ब्रह्मा ब्रह्मवर्चसी, अग्निप्रधानत्वात् अग्निवद्धोता तेजस्वी, तस्मात् दक्षिणतो वदन् ब्रह्मा यजमानस्य दक्षिणभागे ब्रह्मवर्चसं दधाति । उत्तरतो वदन्

रोऽर्धस्तेजस्वितरः । [3]यूपमभितो वदतः । यजमानदेवत्यो वै यूपः । यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्धयतः । [4]किꣳ स्विदासीत्पूर्वचित्तिरित्याह । द्यौर्वै वृष्टिः पूर्वचित्तिः ॥ २१ ॥ दिवमेव वृष्टिमवरुन्धे । [5]किꣳ स्विदासीद्बृहद्वय इ-

होता उत्तरभागे तेजो दधाति । तस्माद् दक्षिणोऽर्ध इतरस्मात् ब्रह्मवर्चसितरः उत्तरश्चेतरस्मात् तेजस्वितरः शक्तिमत्तरः ॥

[3]यूपमित्यादि ॥ 'अभितः परितः' इति द्वितीया । 'पर्यभिभ्यां च' इति तसिल् । यजमानदेवत्य इति । यजमानप्रधान इत्यर्थः ॥

[4]किंस्विदित्यादि ॥

होतुः प्रश्नाः ब्रह्मणस्त्वपुः प्रतिज्ञाः
प्रत्युक्तेषु ब्रह्मणा तेषु सम्यक् ।
तत्रासीना ये सदस्या यद्यस्ते
हृष्टाः सन्तो ब्रह्मणः ख्यापयन्ति ॥

द्यौर्वा इत्यादिभिर्विशिष्टफललाभार्थतया तत्तत्फलसाधनत्वं प्रश्नानां दर्शयति । वृष्टिहेतुर्द्यौः पूर्वचित्तिः प्रथमं चिन्त्यते बुद्ध्यते सर्वैः स्थितिहेतुत्वात् प्रजानाम् । तस्मादाभ्यां प्रश्नप्रतिवचनाभ्यां वृष्टिलाभः ॥

[5]अश्वो वा इति ॥ अश्वो बृहद्वयं देवानामप्यवनीयत्वात् । तस्मात् वृष्ट्या अश्वादिसमृद्धाकलाभः ॥

त्याह । अश्वो वै बृहद्वयः । अश्वमेवावरुन्धे । [6]किꣳ स्विदासीत्पिशङ्गिलेत्याह । रात्रिर्वै पिशङ्गिला । रात्रिमेवावरुन्धे । [7]किꣳ स्विदासीत्पिलिप्पिलेत्याह । श्रीर्वै पिलिप्पिला । अन्नाद्यमेवावरुन्धे ॥२२
[8]कस्स्विदेकाकी चरतीत्याह । असौ वा आदित्य एकाकी चरति । तेज एवावरुन्धे । [9]क उ स्विज्जायते पुनरित्याह । चन्द्रमा वै जायते पुनः । आयुरेवावरुन्धे । [10]किꣳ स्विद्धिमस्य भेषजमि-

[6]रात्रिर्वा इति ॥ पिश अवयवे, तमसा रूपाणि गिलति छादयतीति पिशङ्गिला । पृषोदरादिः । तस्मात् प्रभूतान्नो रात्रिमपि विधेयीकरोति ॥

[7]श्रीर्वा इति ॥ भृशं प्रजानां प्रीणयित्री पिलिप्पिला प्रीणातेर्यङ्लुकि अभ्यासस्य लिगागमो वर्णविकारोपजनश्छान्दसः । तस्मात् विधेयीकृताहोरात्रत्वात् महतोऽन्नादनसामर्थ्यस्य लाभः ॥

[8]असौ वा इति ॥ आदित्यस्सर्वदा एकाकी चरति सेनान्यादीनामनुपलम्भात् तस्मात् आदित्यवत्तेजस्वी भवति ॥

[9]चन्द्रमा वा इति ॥ पुनःपुनर्जायते चन्द्रमाश्शुक्लादौ, तस्मात् तेजस्वी भूत्वा आयुष्मांश्च भवति ॥

[10]अग्निर्वा इत्यादि ॥ आग्नेयत्वाद्ब्राह्मणस्य ब्रह्मवर्चसत्वलाभः ॥

त्याह । अग्निर्वै हिमस्य भेषजम् । ब्रह्मवर्चसमेवावरुन्धे । [11]किꣳ स्विदावपनं महदित्याह ॥२३॥ अयं वै लोक आवपनं महत् । अस्मिन्नेव लोके प्रतितिष्ठति । [12]पृच्छामि त्वा परमन्तं पृथिव्या इत्याह । वेदिर्वै परोऽन्तः पृथिव्याः । वेदिमेवावरुन्धे । [13]पृच्छामि त्वा भुवनस्य नाभिमित्याह । यज्ञो वै भुवनस्य नाभिः । यज्ञमेवावरुन्धे । [14]पृच्छामि त्वा वृष्णो अश्वस्य रेत इत्याह । सोमो वै वृष्णो अश्वस्य रेतः । सोमपीथमेवावरुन्धे ।

---

[11]अयं वा इति ॥ ओप्यते सर्वमस्मिन्निति सर्वाश्रयाधारोऽयं लोकः तेनात्र प्रतिष्ठितो भवति ॥

[12]वेदिर्वा इति ॥ 'सा वा इयं सर्वैव वेदिः'* इति पृथिव्याः प्रकृष्टं स्थानं वेदिः तस्मात् पृथिव्यां प्रतिष्ठाय वेदिमन्ति कर्माण्यवरुन्धे ॥

[13]यज्ञो वा इति ॥ यज्ञेन यज्ञफलेन सर्वं भूतजातं नह्यते बध्यते, तस्मात् यज्ञफलान्यवरुन्धे ॥

[14]सोमो वा इति ॥ वृषा सेक्ता अश्वो व्यापक आत्मा तस्य रेतस्स्थानीयस्सोमः सारत्वात् विश्वोत्पत्तिहेतुत्वाच्च । तस्मात् सोमयागानामाहर्ता भवति ॥

---

* सं. ६-२-४.

[15]पृच्छामि वाचः परमं व्योमेत्याह । ब्रह्म वै वाचः परमं व्योम । ब्रह्मवर्चसमेवावरुन्धे ॥२४॥

होता भवति वै वृष्टिः पूर्वचित्तिरन्नाद्यमेवाव रुन्धे महदित्याह सोमो वै वृष्णो अश्वस्य रेतश्चत्वारि च ॥५॥

[1]अप वा एतस्मात्प्राणाः क्रामन्ति । योऽश्वमेधेन यजते । प्राणाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमान आहुतीर्जुहोति । प्राणानेवास्मिन्दधा-

---

[15]ब्रह्म वा इति ॥ वाचः परमं रक्षणस्थानं ब्रह्म वेदः तस्मात् ब्रह्मवर्चसलाभः ब्रह्महेतुकत्वात्तस्य । एवं गूढाभिप्रायेण होत्रा अश्वमेधप्रभावाविष्करणाय कृतान् प्रश्नान् तत्तदभिप्रायविशेषवेदी ब्रह्मा सदस्यानुमानं फलिताश्वमेधप्रभावं च यथायथा प्रतिक्षेप्तुमर्हति तथा ब्राह्मणेनैवेत्थं प्रदर्शितमिति बोद्धव्यम् ॥

इति तैत्तिरीये ब्राह्मणे तृतीये नवमे पञ्चमोऽनुवाकः.

[1]अप वा इत्यादि ॥ बहूनां पशूनां प्राणवियोजनकरणात् तत्कारिणो यजमानादपि प्राणा अपक्रामन्ति तस्मात् अनेन होमेन यजमाने प्राणान् स्थापयति ॥

ति । नास्मात्प्राणा अपक्रामन्ति । [2]अवन्तीस्स्थाऽवन्तीस्त्वाऽवन्तु । प्रियं त्वां प्रियाणाम् । वर्षिष्ठमाप्यानाम् । निधीनां त्वां निधिपतिꣳ हवामहे वसो ममेत्याह । अपैवास्मै तह्नुवते ॥ २५ ॥ अथो धुवन्त्येवैनम् । अथो न्येवास्मै ह्नुवते । [3]त्रिः परियन्ति । त्रयं इमे लोकाः । एभ्य एवैनं लोके-

---

[2]अवन्तीस्स्थेति ॥ अत्र राजपत्न्यो दक्षिणान् केशपक्षानुद्ग्रथ्य सव्यान् प्रस्रस्य दक्षिणानूरूनाघ्नानाः सिग्भिरवधून्वन्त्यः त्रिः प्रदक्षिणमश्वं धुवन्त्यः परियन्ति अनेन मन्त्रेण । अथ सव्यानुद्ग्रथ्य दक्षिणान् प्रस्रस्य सव्यानूरूनाघ्नानाः अनभिधून्वन्त्यः त्रिः प्रतिपरियन्ति प्रदक्षिणमन्ततो यथा प्रथमे पर्याये । तत्र मृतोपचारभूतसिग्वातस्थानीयं सिग्भिरश्वस्य अभिधूननं क्रियते । तत्सर्वमस्मा अश्वाय अपह्नुवते । अनेन मन्त्रेण करणानि चादधति । अर्पात्यै देवतास्त्वामवन्तु, प्रियत्वादिगुणकं त्वामाह्वयामः इति च मन्त्रलिङ्गात् । कोऽर्थस्तर्हि मृतोपचारस्थानीयेन सिग्भिरभिधवनेनेत्याह—अथो इति । परिधवनच्छलेन एनमश्वमेता धुवन्ति चलयन्ति अप्रेतत्वाच्चानयन्ति । तदपि किमर्थमित्याह । अथो इति । संज्ञपनमेवास्मै निह्नुवते अपलपन्ति न मृतोऽसीति ॥

[3]एभ्य इति ॥ एभ्यस्त्रिभ्यो लोकेभ्यः एनं धुवते लोकत्रयसंचरणसामर्थ्याय लोकस्थितये वा ॥

भ्यो धुवते । [4]त्रिः पुनः परीयन्ति । षट्थ् संपद्यन्ते । षड्वा ऋतवः । ऋतुभिरेवैनं धुवते । [5]अप वा एतेभ्यः प्राणाः क्रामन्ति ॥२६॥ ये यज्ञे धुवनं तन्वते । नवकृत्वः परीयन्ति । नव वै पुरुषे प्राणाः । प्राणानेवात्मन्दधते । नैभ्यः प्राणा अप क्रामन्ति । [6]अम्बे अम्बाल्यम्बिक इति पत्नीमुदानयति । अह्वतैवैनाम् । सुभगे काम्पीलवासिनीत्याह । तप एवैनामुपनयति । सुवर्गे लोके संप्रोर्वाथामित्याह ॥२७॥ सुवर्गमेवैनां लोकं गमय-

[4]त्रिः पुनरिति ॥ पुनरपि त्रिः प्रदक्षिणं परियन्ति सामर्थ्यान्मध्ये त्रिः परियन्तीत्युक्तं भवति । तदाह—'नवकृत्वः परियन्ति' इति । ऋतुभिरिति । ऋतवो हि मृतमप्युत्थापयेयुरिति भावः ॥

[5]ये यज्ञ इति ॥ ये प्रेतोपचारं सिग्भिर्धुवनं यज्ञे दैवे कर्मणि कुर्वते । गुणाभावश्छान्दसः । तत्र नवत्वान्वयात् प्राणानात्मनि दधते महिष्यादयः । ततः प्राणा एभ्यो नापक्रामन्ति ॥

[6]अम्ब इत्यादिना महिषीमलंकृतामुदानयति हस्ते गृह्णाति रमणवत् आह्वयत्येनामेतेन कर्मणे । तप एवेति । संतापहेतुत्वात् अस्या एतत्तपस्स्थानीयं यन्मृतेन मिथुनीभवनम् । स्वर्ग-

ति । [7]आऽहमंजानि गर्भधमा त्वमंजासि गर्भध-
मित्याह । प्रजा वै पशवो गर्भः । प्रजामेव पशू-
नात्मन्धत्ते । [8]देवा वा अश्वमेधे पर्वमाने । सुवर्गं
लोकं न प्राजानन् । तमश्वः प्राजानात् । यथ्सूची-
भिरसिपथान्कल्पयन्ति । सुवर्गस्य लोकस्य प्र-
ज्ञात्यै । गायत्री त्रिष्टुब्जगतीत्याह ॥२८॥ यथा-
यजुरेवैतत् । [9]त्रय्यस्सूच्यो भवन्ति । अयस्मय्यो

मेवेति । स्वर्गमनायैवेदं कर्म भवत्यस्या रत्यर्थं छादनं यत्क्रियते छादितत्वात्स्वर्गस्य ॥

[7]एवं प्रहेळिकास्थानीयान्यन्यपराणि एतानि वाक्यानि कर्मप्राशस्त्यप्रतिपादनपरतया व्याख्यायन्ते ब्राह्मणेन—प्रजा वा इति॥ गर्भधारणवाचोयुक्तिः सर्वप्रजापशुधारणसामर्थ्यं कर्मणः ख्यापयति ॥

[8]देवा वा इत्यादि ॥ व्याख्यातम्* । यत्सूचीभिरिति । विशसनकाले यैः पथिभिरसिर्गच्छति तान् असिमार्गान् सूचीभिः कल्पयन्ति महिष्यादयः । तन्मार्गज्ञानं स्वर्गस्य प्रज्ञात्यै भवति। गायत्रीत्यादि । 'गायत्री त्रिष्टुप्'† इत्यारभ्य द्वाभ्यां द्वाभ्यामृग्भ्यां महिष्यादयः क्रमेण कल्पयन्ति । यथायजुरिति । गायत्र्यादिभिरेवासिमार्गाः प्रवर्तिता भवन्ति ततः ऋत्विजां नापराधः॥

[9]त्रय्य इति ॥ त्रयोऽवयवा आसामिति । 'द्वित्रिभ्यां तयस्यायच्' इत्ययजादेशः । अयस्मय्य इति । 'अयस्मयादीनि

* ब्रा. ३-८-२२. † सं. ५-२-११.

रजता हरिण्यः । अस्य वै लोकस्य रूपमयस्मय्यः । अन्तरिक्षस्य रजताः । दिवो हरिण्यः । दिशो वा अयस्मय्यः । अवान्तरदिशा रजताः । ऊर्ध्वा हरिण्यः । दिश एवास्मै कल्पयति । [10]कस्त्वा छ्यति कस्त्वा विशास्तीत्याहाहिंसायै ॥ २१

ध्रुवते क्रामन्त्यूर्णवाधामित्याह जगतीत्याह कल्पयत्येकं च ॥ ९ ॥

छन्दसि' इति भत्वम् । लोकत्रयानुसारेण महिष्यादिक्रमो नादृतः । तदेवाह अस्य वा इति । उत्तरोत्तरप्रशस्तत्वादेवमुक्तम् । हरिण्यस्सौवर्ण्यः ॥

सौवर्णीभिः पथोऽसेर्जनयति महिषी क्रोडकण्ठान्तराले
वावाता राजतीभिर्विरचयति पथः क्रोडनाभ्यन्तराले ।
त्रिष्टे गात्रेऽसिमार्गान् रचयति परिवृक्त्येवमेवायसीभिः
कण्ठादौ स्यादसक्तादधि(सि)पथकरणं सौकरीयं विशस्तिः ॥

[10]कस्त्वेत्यश्वस्य त्वचमाच्छिनत्ति ॥ तत्र कः प्रजापतिरेव त्वा छ्यति छिनत्ति नाहमिति वचनात् अहिंसायै भवत्यात्मनः ॥

इति तैत्तिरीये ब्राह्मणे तृतीयेऽष्टके नवमप्रपाठके षष्ठोऽनुवाकः.

[1]अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । ऊर्ध्वामेनामुच्छ्रयतादित्याह । श्रीर्वै राष्ट्रमश्वमेधः । श्रियमेवास्मै राष्ट्रमूर्ध्वमुच्छ्रयति । [2]वेणुभारं गिराविवेत्याह । राष्ट्रं वै भारः । राष्ट्रमेवास्मै पर्यूहति । [3]अथास्या मध्यमेधतामित्याह । श्रीर्वै राष्ट्रस्य मध्यम् ॥ ३० ॥ श्रियमेवावरुन्धे । [4]शीते वाते पुनन्निवेत्याह । क्षेमो वै राष्ट्रस्य शी-

---

[1]अप वा इत्यादि ॥ दीर्घकालं राजोपचारविरहात् श्रीश्च राष्ट्रं चास्मात् अपक्रामति । श्रीर्वा इति । तदुभयसाधनत्वात्ताच्छब्द्यम् । तत्र योन्युच्छ्रयणवाचोयुक्त्या श्रीराष्ट्रयोरुच्छ्रितिहेतुत्वं कर्मणो दर्शयति ॥

[2]राष्ट्रं वा इति ॥ भरणीयत्वात् राष्ट्रं भारः । योन्युच्छ्रयणस्य वेणुभारोच्छ्रितिहेतुसाम्यात् राष्ट्रमस्मै पर्यूहति परितस्समूहीकरोति अपक्रान्तमेकत्र प्रकृतिस्थं स्थापयति ॥

[3]श्रीर्वा इति ॥ योनिमध्ये धनवाचोयुक्त्या राष्ट्रमध्यात्मकश्रीलाभः ॥

[4]क्षेम इति ॥ योनिमध्ये धने शीते वाते पुनत उपमानत्वकथनात् तस्य च राष्ट्रक्षेमहेतुत्वात् यजमानस्य क्षेमलाभः, येन राष्ट्रं नापक्रामति ॥

तो वार्तः । क्षेममेवावरुन्धे । [5]यद्धरिणी यवमत्तीत्याह । विड्वै हरिणी । राष्ट्रं यवः । विशं चैवास्मै राष्ट्रं च समीची दधाति । [6]न पुष्टं पशु मन्यत इत्याह । तस्माद्राजा पशून्न पुष्यति ॥३१॥ [7]शूद्रा यदर्यजारा न पोषाय धनायतीत्याह । तस्माद्वैशीपुत्रं नाभिषिञ्चन्ते । [8]इयं यका शकुन्तिकेत्याह ।

[5]विड्वा इति ॥ विट् प्रजा हरिणीस्थानीया बलिहरणात् पोष्यवर्गत्वाच्च । राष्ट्रं स्वयं यवः तेन धार्यमाणत्वात् । अत्र योनिभोगे हरिण्याः यवादनसाम्यकथनात् तादृशे विड्राष्ट्रे समीची संगते स्थापयति । ऋत्विगादिना क्विनि, 'समस्समि' इति सम्यादेशे, 'चौ' इति दीर्घत्वे, 'नपुंसकाच्च' इति शिभावः ॥

[6]तस्मादिति ॥ योनिभोगे तृप्त्यभावस्य अतृप्तहरिणीभोगस्य उपमानत्वं कथयता पर्याप्तसांप्रतत्वाभिधायकपुष्टिपशुग्रहणं कुर्वता राज्ञः पशुपुष्टिः वृत्तिर्न भवतीति सूचितम् ॥

[7]अश्वमेधयाजी निकृष्टवैश्यवृत्तिभाक् न भवतीति ख्याप्यते— तस्मादिति ॥ कामुकायाः धनाया नास्तीति दर्शयता यदर्यग्रहणं कृतं तस्मात् वैशीपुत्रं वैश्यस्त्रीपुत्रं नाभिषिञ्चन्ते 'अर्यस्स्वामिवैश्ययोः' इति अर्यशब्दो निपात्यते ॥

[8]विड्वा इति ॥ प्रजा शकुन्तिका शकुन्तवदनवस्थितत्वात् क्षुद्रकस्वभावत्वाच्च सर्वकार्येषु । राष्ट्रमेवाश्वमेधः सर्वराष्ट्रसाध्यत्वात् ।

विड्वै शकुन्तिका । राष्ट्रमश्वमेधः । विशं चैवास्मै राष्ट्रं च समीचीं दधाति । [9]आहलमिति सर्पतीत्याह । तस्माद्राष्ट्राय विशस्सर्पन्ति । [10]आहतं गभे पस इत्याह । विड्वै गभः ॥ ३२ ॥ राष्ट्रं पसः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विशं घातुकम् । [11]माता च ते पिता च त इत्याह । इयं वै माता ।

---

तत्र अनुरागातिशये शकुन्तिकोपमानकथनात् विड्राष्ट्रे समीची नित्यानुरक्ते स्थापयति यथाऽस्मान्नापक्रामति ॥

[9]तस्मादिति ॥ दयितविरहाक्षमत्वं स्त्रीणां दर्शयता कुर्यादिस्समन्तादाकृश्य भर्तृदेशमेव सर्पतीति यदुक्तं तस्मात् राष्ट्राय परराष्ट्रविजयाय विशः सर्पन्ति अस्य वा राष्ट्रं प्रपद्यन्ते नापक्रामन्ति ॥

[10]विड्वा इति ॥ प्रजा गभः गर्भः वर्णलोपः, भगो वा वर्णविपर्ययः, तत्रोत्पन्नत्वात् । राष्ट्रमेव पसः शुक्लं शेफो वा राष्ट्रवृद्धिहेतुत्वात् । तत्र योन्याः शेफसो यदाहननं यच्चाघातजशुक्लपानं योन्या तदुभयकथनं राष्ट्रस्य विश्याघातसूचनार्थम् । हन्तिर्गतिकर्मा आगमयति राष्ट्रं विट्सु तस्य तदधीनात्मलाभत्वात् । तस्मात् अद्यत्वेऽपि राष्ट्रं विशं प्रजां घातुकं ताच्छील्येन गच्छति कृष्यादेस्तदधीनत्वात् ॥

[11]इयं वा इति ॥ प्रजननयोस्संयोगोक्तौ मातापितृग्रहणात्

असौ पिता । आभ्यामेवैनं परिददाति । [12]अग्रं वृक्षस्य रोहत इत्याह । श्रीर्वै वृक्षस्याग्रम् । श्रियमेवावरुन्धे ॥ २३ ॥ [13]प्रसुलामीति ते पिता गभे मुष्टिमतंसयदित्याह । विड्वै गभः । राष्ट्रं मुष्टिः । राष्ट्रमेव विश्याहन्ति । तस्माद्राष्ट्रं विशं घातुकम् । [14]अप वा एतेभ्यः प्राणाः क्रामन्ति । ये यज्ञेऽपूतं वदन्ति । दधिक्राव्णो अकारिषमिति सुरभिमतीमृचं वदन्ति । प्राणा वै सुरभयः । प्राणानेवा-

मातृपितृस्थानीयाभ्यां द्यावापृथिवीभ्यां यजमानं परिददाति रक्षार्थं, येन श्रीराष्ट्रं अस्मात् नापक्रामतः ॥

[12]श्रीर्वा इति ॥ संभोगकाष्ठां कथयता वृक्षाग्ररोहणकथनात् श्रीकाष्ठालाभो यजमानस्य । श्रीर्हि वृक्षस्याग्रं खट्वारोहणमित्यर्थः । यद्वा—बहुप्रकारोपजीव्यत्वात् राष्ट्रं वृक्षः उच्छ्रायः तस्याग्रं सा श्रीः श्रीरेव साऽवरुद्धा तस्मात् नापक्रामति ॥

[13]विड्वा इति ॥ संभोगातिप्रसङ्गं कथयता गभे भगे मुष्टेः शेफसः यत्पतनं उक्तं तत् राष्ट्रमेव विशि आहन्ति आगमयति अनुप्रवेशयति । तस्मात् राष्ट्रं विश्यागमनशीलं यस्मात् विट् भगः राष्ट्रं मुष्टिः वृद्धिहेतुत्वात् ॥

[14]अप वा इत्यादि ॥ ये यज्ञे अपूतं असत्यं अन्यपराक्षरं वाक्यं वदन्ति तेभ्यः सुरभिस्वरूपाः पवित्रस्वभावाः

त्मन्दधते । नैभ्यः प्राणा अपक्रामन्ति । [15]आपो हि ष्ठा मयोभुव इत्यद्भिर्मार्जयन्ते । आपो वै सर्वा देवताः । देवताभिरेवात्मानं पवयन्ते ॥ ३४ ॥

राष्ट्रस्य मध्यं पुष्यति गर्भो रुन्धे
दधते चत्वारि च ॥ ७ ॥

[1]प्रजापतिः प्रजास्सृष्ट्वा प्रेणाऽनु प्राविशत् । ताभ्यः पुनस्संभवितुं नाशक्नोत् । सोऽब्रवीत् । ऋध्नवदित्सः । यो मेतः पुनस्संभरदिति । तं देवा अश्वमेधेनैव समभरन् । ततो वै त आर्ध्नुवन् । योऽश्वमेधेन यजते । प्रजापतिमेव सम्भरत्यृध्नोति ।

प्राणा अपक्रामन्ति तस्मात् 'दधिक्राव्णः'* इति सुरभिशब्दवत्या ऋचो जपात् सुरभीन् प्राणान् आत्मनि स्थापयन्ति ॥

[15]आपो हिष्ठेत्यादि ॥ गतम्* ॥

इति तृतीये नवमे सप्तमोऽनुवाकः.

---

[1]प्रजापतिः प्रजास्सृष्ट्वेत्यादि ॥ प्रेणा प्रेम्णा । छान्दसो वर्णलोपः । प्रजासु क्षिप्तस्यात्मीयेन रूपेण संहत्यावस्थानं संभवः पृथक्त्वं, तत्कर्तुमशक्तोऽब्रवीत् ऋध्नवदिति । ऋध्नुयादेव सः यो मा इतः प्रजाभ्यः संभरत् संभरेत् । भृशोल्लेट् । एकत्र संभृतं कुर्यात् । तमित्यादि । गतम् ॥

---

*सं. ७-४-१९.

[2]पुरुषमालभते ॥ ३५ ॥ वैराजो वै पुरुषः । विराजमेवालभते । अथो अन्नं वै विराट् । अन्नमेवावरुन्धे । [3]अश्वमालभते । प्राजापत्यो वा अश्वः । प्रजापतिमेवालभते । अथो श्रीर्वा एकशफम् । श्रियमेवावरुन्धे । [4]गामालभते ॥ ३६ ॥ यज्ञो वै गौः । यज्ञमेवालभते । अथो अन्नं वै गौः । अन्नमेवावरुन्धे । [5]अजावी आलभते भूम्ने । अथो पुष्टिर्वै

[2]पुरुषमालभत इत्यादि ॥ जातिनिर्देशोऽयं, यदुक्तं 'वैराजो पुरुषो'* इति । वैराजः पुरुषः विराजः प्रजापतेः अपत्यत्वात् । तस्मात् विराडेव आलब्धो भवति । अपि च विराजोऽन्नत्वात् अन्नं लब्धं भवति ॥

[3]अश्वमिति ॥ अश्वस्य प्रजापतेरक्षिपरिणामत्वात् प्रजापतिरेवालब्धो भवति । अपि च—श्रीमत्सम्बन्धित्वेन वा एकशफपशूनां श्रीत्वात् श्रीः आलब्धा भवति । जातिनिर्देशवस्त्वभिप्रायेण नपुंसकत्वम् ॥

[4]गामिति ॥ अभिमतप्रदत्वेन पावनत्वेन वा यज्ञ एव गौः तस्मात् यज्ञ एवालब्धो भवति । अपि च अदनीयानां क्षीरादीनां हेतुत्वात् अन्नमेव गौः तस्मात् अन्नं लब्धं भवति ॥

[5]अजावी इति ॥ भूमा बहुत्वं वृद्धिः 'बहोर्लोपो भू च बहोः'॥ पर्यग्निकृतमित्यादि । गतम् † ॥

* सं. ५-६-२१. † ब्रा. ३-९-३.

भूमा । पुष्टिमेवावरुन्धे । पर्यग्निकृतं पुरुषं चार-
ण्यार्श्चोत्सृजन्त्यहिंसायै । °उभौ वा एतौ पशू
आलभ्येते । यश्चावमो यश्च परमः । तेऽस्योभये यज्ञे
बद्धाः । अभीष्टा अभिप्रीताः । अभिजिता अभिहुता
भवन्ति । नैनं दंक्ष्णवः पशवो यज्ञे बद्धाः । अभीष्टा
अभिप्रीताः । अभिजिता अभिहुता हिंसन्ति ।
योऽश्वमेधेन यजते । य उ चैनमेवं वेद ॥ ३७ ॥

लभते गामालभते परमोऽष्टौ च ॥ ८ ॥

°उभौ वा इति ॥ अवमः पुरुषादिः परमः विराडादिः ते उभये पशवः अस्य यज्ञे बद्धाः नियुक्ताः पर्यग्निकृतोत्सर्गविनियोगमात्रेण अभीष्टाः आभिमुख्येन प्राप्ताः । इष गतौ । अभिप्रीताः आभिमुख्येन प्रीताः अभिजिताः वशीकृताः अभिहुताः अग्नौ परिहृता एव भवन्ति । ये पुनः अस्य यज्ञे बद्धाः दंक्ष्णवः दंशनशीलाः हिंस्राः पशवः 'दंशेश्च' इति क्सुनप्रत्ययः । अत्र दखषटणान् प्रातिशाख्यविद आहुः । अथ तेऽप्यभीष्टादिगुणा भवन्तो नैव हिंसन्ति । कम्? योऽश्वमेधेन यजते । यश्चैनमश्वमेधं एवंप्रभावं वेदैव न त्वनेन यजते तावुभावपि न हिंसन्ति ॥

इति तृतीये नवमे अष्टमोऽनुवाकः.

[1] प्रथमेन वा एष स्तोमेन राध्वा । चतुष्टोमेन कृतेनायानामुत्तरेऽहन् । एकविꣳशे प्रतिष्ठायां प्रतितिष्ठति । एकविꣳशात्प्रतिष्ठाया ऋतूनन्वारोहति । ऋतवो वै पृष्ठानि । ऋतवस्संवथ्सरः । ऋतुष्वेव संवथ्सरे प्रतिष्ठाय । देवता अभ्यारोहति । शाक्वरयः पृष्ठं भवन्त्यन्यदन्यच्छन्दः । अन्येऽन्ये वा एते पशव आलभ्यन्ते ॥ ३८ ॥ उतेव ग्राम्याः । उतेवारण्याः । अहरेव रूपेण समर्धय-

---

[1] प्रथमेनेत्यादि ॥ प्रथमेन स्तोमेन स्तोमवता अह्ना चतुष्टोमेन चतुरुत्तरस्तोमचतुष्टयेन अयानां कालावयवानां मध्ये कृतेन कृतयुगस्थानीयेन कर्मसिद्धिहेतुत्वात्ताच्छब्द्यम् । तादृशेन प्रथमेनाह्ना राद्ध्वा कालसाद्गुण्येन वृद्धिं प्राप्य अविकलकर्मा भूत्वा उत्तरे एकविंशे अहनि प्रतिष्ठायां प्रतिष्ठाभूते प्रतितिष्ठति अविचलितसंबन्धो भवति । ततः प्रतिष्ठाभूतादेकविंशादह्नः प्रथमं ऋतूनन्वारोहति देवीभविष्यति । पृष्ठानामृतुत्वं षट्त्वान्वयेन । ऋतवस्संवत्सरः तदारब्धत्वात् । ततः ऋत्वात्मनि संवत्सरे प्रतिष्ठाय देवता अभ्यारोहति देवता लक्षीकृत्य आरोहति देवीभवतीत्यर्थः । शाक्वरं साम सर्वं पृष्ठं भवति छन्दस्त्वन्यदन्यद्भवति । अस्मिन् अहनि पशवः खलु अन्येऽन्ये आलभ्यन्ते ग्राम्याश्चैव आरण्याश्चैव तस्मात् अह्नो रूपसमृद्धिमे

ति । अथो अह्न एवैष बलिर्ह्रियते । [2]तदाहुः । अपशवो वा एते । यदजावयश्चारण्याश्च । एते वै सर्वे पशवः । यद्गव्या इति । गव्यान्पशूनुत्तमेऽहन्नालभते ॥ ३१ ॥ तेनैवोभयान्पशूनवरुन्धे । प्राजापत्या भवन्ति । अनभिजितस्याभिजित्यै । [3]सौरीर्नव श्वेता वशा अनूबन्ध्या भवन्ति । अन्तत एव ब्रह्मवर्चसमवरुन्धे । सोमाय स्वराज्ञेऽनोवाहावनड्वाहाविति द्वन्द्विनः पशूनालभते । अहोरात्राणाम-

तेन छन्दोऽन्यत्वेन करोति । अथो अपि च अह्न एष बलिः ह्रियते उपह्रियते याहृक्प्रकाराः पशवोऽस्मिन्नालभ्यन्ते ॥

[2]तदाहुरिति ॥ अजावयः आरण्याश्च अपशवः अपशुस्थानीयाः पशुकार्याकरणात् । ये पुनः गव्याः गोजातौ साधवः त एव सर्वपशुकार्यकरणात् सर्वे एव पशवः । तस्मात् उत्तमे अहनि सर्वस्तोमेऽतिरात्रे गव्यान् पशून् आश्वमेधिकान् ऐकादशिनान्वा आलभते । तेन ग्राम्यारण्योभयपशुलाभः सर्वेषां प्राजापत्यत्वात् प्रजापतेरेवास्य न किंचिदप्यनभिजितं भवति ॥

[3]सौरीरिति ॥ अनूबन्ध्यास्थाने सौर्यो वशा नव भवन्ति । तत्समाप्तौ यावज्जीवं ब्रह्मवर्चसं लभते । द्वंद्विन इति पक्षान्तरम्, द्वे द्वे परिमाणमेषां द्वंद्विनः 'सोमाय स्वराज्ञेऽनोवाहावनड्वाहौ' *

* सं. ५-६-२१,

भिजित्यै । [4]पशुभिर्वा एष व्यृद्ध्यते । योऽश्वमेधेन यजते । छगलं कल्माषं किकिदीविं विदीगयमिति त्वाष्ट्रान्पशूनालभते । पशुभिरेवात्मान समर्धयति । [5]ऋतुभिर्वा एष व्यृद्ध्यते । योऽश्वमेधेन यजते । पिशङ्गास्त्रयो वासन्ता इत्यृतुपशूनालभते । ऋतुभिरेवात्मान समर्धयति । [6]आ वा एष पशुभ्यो

---

इत्यादयः, अभिव्यक्तौ द्वंद्वनिपातनम् । तत्र द्वित्वान्वयात् अहोरात्राणां अभिजयाय भवति ॥

[4]पशुभिर्वा इत्यादि ॥ बहुपशुहिंसया पशवोऽस्मिन् अपरक्तास्स्युः । तत्र पात्नीवते कर्मणि त्वाष्ट्रच्छगलाद्यालम्भात् पशुभिस्समृद्धमेनं करोति, त्वष्टुः पशूनां रूपकृत्त्वात् । छगलः छागार्भकः, कल्माषः कृष्णबिन्दुमान्, किकिदीविः तित्तिरिः, छागविशेष इत्येके । यः किकीति शब्दयन् गच्छति, विदीगयः श्वेतबकः, अश्वविशेष इत्येके, अदान्तत्वादनभिप्रेतां दिशं यो याति ॥

[5]ऋतुभिर्वा इति ॥ दीर्घकालमृतुधर्मानादरात् । तत्रागामिवसन्तादिऋतुपशूनामालम्भात् ऋतुभिस्समृद्धमात्मानं करोति ॥

[6]आ वा इति ॥ सर्वपशुमारणे पशवोऽपरक्तास्स्युः । पर्यग्निकृताः काश्चित् पशुजातीः उत्सृजन्ति । भूयोवचनमवश्यक-

वृश्च्यते । योऽश्वमेधेन यजंते । पर्यग्निकृता उत्सृ-
जन्त्यनाव्रस्काय ॥ ४० ॥

लभ्यन्ते लभते त्वाष्ट्रान्पशूनालंभतेऽष्टौ च ॥ ९

[1]प्रजापतिरकामयत महानंन्नादस्स्यामिति ।
स एतावंश्वमेधे मंहिमानावपश्यत् । तावंगृह्णीत ।
ततो वै स महानंन्नादोंऽभवत् । यः कामयेत महा-
नंन्नादस्स्यामिति । स एतावंश्वमेधे मंहिमानौ गृ-
ह्णीत । महानेवान्नादो भंवति । [2]यजमानदेवत्या
वै वपा । राजा महिमा । यद्वपां मंहिम्नोभयतः

---

तंन्यत्वाय । तत् अनाव्रस्काय अच्छेदाय भवति । व्रश्चतेर्घञ्,
कृत्वे श्रुत्वस्य निवृत्तेः सकार एव श्रूयते ॥

इति तृतीये नवमे नवमोऽनुवाकः.

---

[1]प्रजापतिरकामयतेत्यादि ॥ अन्नादनसामर्थ्यविषयं महत्त्वम् ।
यद्वा ऐश्वर्येण महान् अन्नादनसमर्थश्च स्यामिति । महिमानौ
महिमाख्यौ ग्रहावपश्यत् । अगृह्णीत च । 'यः प्राणत', य आ-
त्मदाः' * इति पूर्वोत्तरौ महिमानौ । गतमन्यत् ॥

[2]यजमानदेवत्येति ॥ उभयोः प्राधान्याद्देवतैश्वर्यमुपचर्य देव-
तोक्ता । 'देवतान्तात्तादर्थ्ये यत्' राजा दीप्तिमान् तत्स्थानो

---

* सं. ७-५-१६,१७.

परियजंति । यजमानमेव राज्येनोभयतः परिगृह्णाति । [3]पुरस्तात्स्वाहाकारा वा अन्ये देवाः । उपरिष्टात्स्वाहाकारा अन्ये । ते वा एतेऽश्व एव मेध्य उभयेऽवरुध्यन्ते । यद्रूपां महिम्नोभयतः परियजंति । तानेवोभयान्प्रीणाति ॥ ४१ ॥

परियजंति षट् ॥ १० ॥

[1]वैश्वदेवो वा अश्वः । तं यत्प्राजापत्यं कुर्यात् । या देवता अपिभागाः । ता भागधेयेन व्यर्धयेत् ।

---

महिमाख्यो होमः हूयमानाया एव वपाया दीप्तिस्थानीयत्वात् तत्र महिम्ना पूर्वेणोत्तरेण च उभयतः आदावन्ते वपायाः परियजनात् यजमानमेव राज्येन राज्यैश्वर्येण उभयतः अग्रतः पृष्ठतश्च इह चामुत्र च वा परिगृह्णाति ॥

[3]पुरस्तात्स्वाहाकारा इत्यादि ॥ ते उभये द्विप्रकारा देवाः मेध्ये अस्मिन् अश्वे । ते वा एत इति । अश्वस्य विश्वदेवत्वात् परिवप्ययोर्वेयं स्तुतिः । ताभ्यां अवरुद्धान् महिमभ्यां प्रीणयतीति ॥

इति तृतीये नवमे दशमोऽनुवाकः.

---

[1]वैश्वदेवो वा इति ॥ प्राजापत्यमेव यदि कुर्यात् या अन्या देवता अपिभागाः संभावितभागाः । संभावनायामपिशब्दः ।

देवताभ्यस्समदं दध्यात् । स्तेगान्द ꣳ ष्ट्राभ्यां मण्डूकाञ्जम्भ्येभिरिति । आज्यमवदानं कृत्वा प्रतिसंख्यायमाहुतीर्जुहोति । या एव देवता अपिभागाः । ता भागधेयेन समर्धयति । न देवताभ्यस्समदं दधाति ॥ ४२ ॥ [2] चतुर्दशैतानुवाकाञ्जुहोत्यनन्तरित्यै । प्रयासाय स्वाहेति पञ्चदशम् । पञ्चदश वा अर्धमासस्य रात्रयः । अर्धमासशस्संवथ्सर आप्यते ।

---

ताः भागधेयेन आत्मीयेन व्यर्धयेत् वियोजयेत् । ततो देवताभ्यः समदं कलहं दध्यात् उत्पादयेत् सह माद्यन्त्यस्यामिति समत् कलहः, अधिकरणे संपदादित्वात् क्विप् । स्तेगादिभ्यो होमस्सर्वा देवतास्समर्धयति समृद्धभागाः करोति । आज्यमवदानं अवदानप्रमाणं कृत्वा गृहीत्वा आहुतीर्जुहोति प्रतिसंख्यायं प्रतिसंख्याय 'ख्या प्रकथने' प्रत्येकं सम्यक्कथयित्वा मन्त्रान् जुहोति प्रतिमन्त्रमिति यावत् । आभीक्ष्ण्ये णमुल्, 'आतो युक्चिण्कृतोः' इति युक् ॥

[2] चतुर्दशेति ॥ हविष्षु हुतेषु नारिष्ठान् हुत्वा एतैश्चतुर्दशानुवाकैश्शरीरहोमान् जुहोति । अनन्तरित्यै कस्याश्चिदपि देवताया अनन्तर्हितत्वाय । पञ्चदशमिति । क्रमप्राप्तं 'द्यौस्ते पृष्ठं'* इति हित्वा 'प्रयासाय'† इति पञ्चदशस्यानुवाकस्य स्थाने जु-

---

* सं. ५-७-२९. † सं. १-४-३५.

[3]देवासुरास्संयत्ता आसन्। तेऽब्रुवन्नग्नयस्स्विष्टकृतः। अश्वस्य मेध्यस्य वयमुद्धारमुद्धरामहै। अथैतानभिभवामेति। ते लोहितमुदहरन्त। ततो देवा अभवन्॥४३॥ परासुराः। यथ्स्विष्टकृद्भ्यो लोहितं जुहोति भ्रातृव्याभिभूत्यै। भवत्यात्मना। परास्य भ्रातृव्यो भवति। [4]गोमृगकण्ठेन प्रथमामाहुतिं जुहोति। पशवो वै गोमृगः। रु-

होति तत्संख्याद्वारेण संवत्सरात्मा संवत्सरनिलयास्सर्वा देवताः प्रीता भवन्ति। ततः 'चित्तं सन्तानेन'* इति षोडशं हुत्वा 'द्यौस्ते पृष्ठं'† इति सप्तदशः कार्यः॥

[3]देवासुरा इत्यादि॥ देवासुरेषु संयत्तेषु ये अश्वमेधस्य त्रयः स्विष्टकृतः तेऽब्रुवन् अस्य मेध्यस्याश्वस्य संबन्धि किंचिद्द्रव्यं वयमुद्धारं आत्मीयभागादधिकं भागं उद्धरामहै तत एतान् असुरान् अभिभवामेति। अथ देवैरनुज्ञाते लोहितं अश्वस्य उदहरन्त अधिकं गृहीतवन्तः। तस्मात् स्विष्टकृद्भ्यो लोहितहोमो भ्रातृव्याभिभूत्यै भवति॥

[4]गोमृगकण्ठेनेत्यादि॥ उक्तो गोमृगः‡। तस्य कण्ठे बिले अश्वस्य लोहितमानीय तेन प्रथमामाहुतिं जुहोति पशुसिद्धि§-

*सं. १-४-३६. †सं. ५-७-२५.
‡ब्रा. ३-८-२०. §शुद्धि.

द्रोऽग्निस्स्विष्टकृत् । रुद्रादेव पशूनन्तर्दधाति । अथो यत्रैषाऽऽहुतिर् हूयते । न तत्र रुद्रः पशूनभिमन्यते ॥ ४४ ॥ [5]अश्वशफेन द्वितीयामाहुतिं जुहोति । पशवो वा एकशफम् । रुद्रोऽग्निस्स्विष्टकृत् । रुद्रादेव पशूनन्तर्दधाति । अथो यत्रैषाऽऽहुतिर् हूयते । न तत्र रुद्रः पशूनभिमन्यते । [6]अयस्मयेन कमण्डलुना तृतीयाम् । आहुतिं जुहोत्यायास्यो वै प्रजाः । रुद्रोऽग्निस्स्विष्टकृत् । रुद्रादेव प्रजा अन्तर्दधाति । अथो यत्रैषाऽऽहुतिर् हूयते ।

हेतुत्वात् । पशवो गोमृगः । स्वयं रुद्र एव स्विष्टकृदग्निः तद्रूपेणाविर्भावात् । तस्मादनेन होमो रुद्रात्पशूनन्तर्दधाति दर्शनपथादपनयति । अथो अपिच यत्रैषाऽऽहुतिः गोमृगकण्ठेन रुद्रात्मने स्विष्टकृते हूयते तत्र देशे रुद्रोऽपि* पशून् नाभिमन्यते हन्तुमना न बुध्यते ॥

[5]अश्वशफेनेत्यादि ॥ अश्वशफं बिलयुक्तं कृत्वा लोहितमवदाय जुहोति । गतमन्यत् ॥

[6]अयस्मयेनेत्यादि ॥ भत्वाद्रुत्वाभावः । आयास्य इति । अयास्येन सृष्टाः । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वात्—'उदा-

*रुद्रः क्रूरोपि.

न तत्रं रुद्रः प्रजा अभिमंन्यते ॥ ४५॥
दृधात्यभंवन्मन्यते प्रजा अन्तर्दंधाति
द्वे चं ॥ ११ ॥

[1]अश्वंस्य वा आलंब्धस्य मेधु उदंक्रामत् । तदंश्वस्तोमीयंमभवत् । यदंश्वस्तोमीयं जुहोति । समैधमेवैनमालंभते । [2]आज्यैन जुहोति । मेधो वा आज्यंम् । मेधोंऽश्वस्तोमीयंम् । मेधैनैवास्मिन्मेधं दधाति । [3]षट्त्रिꣳशतं जुहोति । षट्त्रिꣳशदक्षरा

त्तस्वरितयोर्यणः' इति विभक्तिस्स्वर्यते । गतमन्यत् । प्रजा इति विशेषः ॥

इति तृतीये नवमे एकादशोऽनुवाकः.

[1]अश्वस्य वा इत्यादि ॥ मेधः सारः आलम्भनानन्तरं अश्वात् उदक्रामत, ततोऽश्वस्तोमीयात्मना अतिष्ठत् । 'यदक्रन्दः'* इत्यनुवाकत्रयाम्नातानां मन्त्राणां इयमाख्या, अश्वस्तुतिः प्रयोजनम् । अनुप्रवचनादित्वाच्छः । समेधं ससार एवालब्धो भवति ॥

[2]आज्येनेत्यादि ॥ मेधद्वयसंयोगादश्वमेधं भूयिष्ठं दधाति॥

[3]षट्त्रिंशतमिति ॥ अनुवाकत्रये पञ्चत्रिंशत्, 'क्रमैरत्यक्रमीत्'† इत्येका तथा षट्त्रिंशदाहुतिः । बार्हता इति । बृहत्याः प-

* सं. ४-६-७. † सं. ५-७-२४.

बृहती ॥ ४६ ॥ बार्हताः पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्धयति । ता यद्भूयसीर्वा कनीयसीर्वा जुहुयात् । पशून्मात्रया व्यर्धयेत् । षट्त्रिꣳशतं जुहोति । षट्त्रिꣳशदक्षरा बृहती । बार्हताः पशवः । सा पशूनां मात्रा । पशूनेव मात्रया समर्धयति ॥ ४७ ॥ [1]अश्वस्तोमीयꣳ हुत्वा द्विपदा जुहोति । द्विपाद्वै पुरुषो द्विप्रति-

---

शुहेतुत्वात् । बृहतीशब्द उत्सादिः । मात्रा परिमाणं षट्त्रिंशत्संख्या पशूनां बार्हतत्वात् । तस्मात्संख्याविशेषेण निजमात्रालाभात् समृद्धाः पशवो भवन्ति । तस्मात् षट्त्रिंशतो भूयस्यः अतिरिक्ताः कनीयस्यः ऊनाश्चाहुतयः पशूनां व्यृद्धिहेतवः । तस्मात् षट्त्रिंशतमेवेत्यादरार्थं पुनर्वचनम् । एताश्च स्विष्टकृतः प्रागेव होतव्याः ॥

[1]'अश्वस्तोमीयमिति ॥ स्तोमीयानन्तरं द्विपदाः 'इमा नुकं भुवना सीषधेम'* इत्याद्यास्तिस्रो जुहोति । द्वौ पादौ आसामिति 'संख्यासुपूर्वस्य' इति लोपे समासान्तोऽपि 'पादः पत्' इति पद्भावः । द्विप्रतिष्ठः प्रतितिष्ठत्याभ्यामिति प्रतिष्ठे पादौ ताभ्यामेव प्रतिष्ठातुं शक्नोतीति द्विप्रतिष्ठः । यद्वा—द्विप्रतिष्ठः द्युपृथिवीप्रतिष्ठः तस्माद्द्वित्वलाभेनैनं प्रतिष्ठासमृद्धं करोति ॥

---

* आ. १-२७.

ष्ठः । तदैनं प्रतिष्ठया समर्धयति । [5]तदाहुः । अ-श्वस्तोमीयं पूर्वꣳ होतव्या (३) द्विपदा (३) इति। अश्वो वा अश्वस्तोमीयम् । पुरुषो द्विपदाः । अ-श्वस्तोमीयꣳ हुत्वा द्विपदां जुहोति । तस्माद्द्विपा-च्चतुष्पादमत्ति । अथो द्विपद्येव चतुष्पदः प्रतिष्ठा-पयति । द्विपदां हुत्वा । नान्यामुत्तरामाहुतिं जुहु-यात् । यदन्यामुत्तरामाहुतिं जुहुयात् । प्र प्रतिष्ठा-याश्च्यवेत । द्विपदां अन्ततो जुहोति प्रतिष्ठित्यै ॥

बृहत्यर्धयति स्थापयति पश्वं च ॥१२॥

---

[5]तदाहुरिति ॥ विचार्यमाणानामित्युभयत्र प्लुतः । अश्व एवा-श्वस्तोमीयं तत्स्तोत्रप्रधानत्वात्, पुरुषः स्वयं द्विपदा ऋचः द्विपात्त्वात् । तस्मात् अश्वस्तोमीयानन्तरं द्विपदाहोमात द्विपात् प्रधानत्वात् गुणभूतं चतुष्पादं अत्ति भुङ्क्ते । अपिच पश्चात् सृष्टे द्विपदि प्रथमसृष्टान् चतुष्पदः प्रतिष्ठापयति द्विपादधीन-त्वाच्चतुष्पदां प्रतिष्ठायाः रक्षणादिरूपायाः । अथ द्विपदा हुत्वा उत्तरामनन्तरभाविनीं आहुतिं स्तेगाद्याहुतिं न जुहुयात् । यदि जुहुयात् प्रतिष्ठायाः प्रच्यवेत । तस्मात् अन्ततः द्विपदा जुहोति अश्वस्तोमीयात्पूर्वमेव स्तेगाद्याहुतिः । द्विपदा हुत्वा स्विष्टकृदेव, तत्प्रतिष्ठित्यै भवति ॥

इति तृतीये नवमे द्वादशोऽनुवाकः.

[1]प्रजापतिरश्वमेधमसृजत । सोऽस्मात्सृष्टोपाक्रामत् । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत । तदिष्टीनामिष्टित्वम् । यत्संवत्सरमिष्टिभिर्यजते । अश्वमेव तदन्विच्छति । [2]सावित्रियो भवन्ति ॥ ४१ ॥ इयं वै सविता । यो वा अस्यां नश्यति यो निलयते । अस्यां वाव तं विन्दन्ति । [3]न वा इमां कश्च नेत्याहुः । तिर्यङ्ङूर्ध्वो-

[1]प्रजापतिरश्वमेधमिति ॥ यज्ञक्रतवो यूपवन्तः । इष्टित्वमिति । इष्यते प्राप्यते अश्वमेध आभिरिति इष्टयः 'इष गतौ' यद्वा—इच्छैव लाभान्ता । इष्टिभिरिति । सावित्रीभिरश्वस्यापक्रान्तस्य अन्वेषणस्थानीयं तत् यत्संवत्सरमिष्टिभिर्यजते ॥

[2]सावित्रियः सवित्रेऽष्टाकपालाः । विहितानामेव पुनर्वचनं गुणान्तराभिधानार्थम् । इयं वा इति । सर्वस्य प्रेरयित्री अनुज्ञात्री वा । तत्कथमित्याह—यो वा अस्यामिति । यः पदार्थोऽस्यां नश्यति पलायते अदर्शनं गच्छति वा, यश्च निलयते स्वदेशे निलीनो भवति अपवरकादौ सुरक्षितस्तिष्ठति । लीयतेर्व्यत्ययेन शप् । तं सर्वमप्यस्यां पृथिव्यामेव विन्दन्ति लभन्ते न तामतीत्य गच्छन्ति ॥

[3]तदेवाह—न वा इति ॥ इत्याहुरित्येतत् अर्हतीत्यस्या-

त्यैतुमर्हतीति । यथ्सावित्रियो भवन्ति । सवितृप्रसूत एवैनमिच्छति । [4]ईश्वरो वा अश्वः प्रमुक्तः परांपरावतं गन्तोः । यथ्सायं धृतीर्जुहोति । अश्वस्य यत्यै धृत्यै ॥५०॥ [5]यत्प्रातरिष्टिभिर्यजते । अश्वमेव तदन्विच्छति । यथ्सायं धृतीर्जुहोति ।

---

नन्तरं द्रष्टव्यम् । कश्चन कश्चिदपि गोपक्ष्यादिः तिर्यग्देहः, ऊर्ध्वदेहः पुरुषादिश्च इमां अत्येतुं अतिक्रम्य गन्तुं नार्हति न शक्नोतीत्याहुः पुराविदः । तस्मात् इयमेव सर्वस्य सवित्रीति सावितृत्वेनोपचर्यते । तस्मात्सावित्रत्वात् सवित्रैवानुज्ञात एनं अश्वं अनष्टं इच्छति नष्टमपि लभते वा । गत्यर्थस्य वर्णव्यत्ययेन छत्वम् ॥

[4]ईश्वरो वा इति ॥ प्रमुक्तत्वात् परांपरावतं अतिदूरदेशं गन्तुं ईश्वरः समर्थः स्यात् 'ईश्वरे तोसुन्कसुनौ' इति तोसुन्। 'उपसर्गाच्छन्दसि' इति वतिः । तस्मात् 'इह धृतिस्स्वाहा'* इत्यादीनां धृतीनां सायं होमः अश्वस्य यत्यै यमनाय बन्धनाय भवति प्रमुक्तो न भवतीति यावत्, धृत्यै धारणाय भवति॥

[5]यदित्यादि ॥ एवमुक्तेन प्रकारेण प्रातरिष्टिभिर्विमुक्तं अश्वं अन्विच्छति, सायं धृतिभिरविमुक्तत्वमेव क्रियत इति । क्षेम्या इति । क्षेमे साधवः क्षेमे भवा वा सायं प्रजा भवन्ति विस्त्रब्धत्वात्सायं धृतिभिर्गृह एवाश्वस्य गुप्तत्वात् । दिवा तु

---

* सं. ७-४-१७.

अश्वस्यैव यत्यै धृत्यै । तस्माथ्सायं प्रजाः क्षेम्या भवन्ति। यत्प्रातरिष्टिभिर्यजंते। अश्वमेव तदन्विच्छति । तस्माद्दिवा नष्टैष एंति । [6]यत्प्रातरिष्टिभिर्यजंते सायं धृतीर्जुहोति । अहोरात्राभ्यामेवैनमन्विच्छति । अथो अहोरात्राभ्यामेवास्मै योगक्षेमं कल्पयति ॥५१॥

भवन्ति धृत्या एनमन्विच्छत्येकं च ॥१३॥

---

विमुक्तस्य गवादेरन्वेषणव्यग्रत्वान्न क्षेम्या भवन्ति, योगे व्यापृतत्वादिति भावः । विमुक्तमश्वमन्विच्छन्तो यस्मात् प्रातरिष्टिभिर्यजन्ति तस्मादद्यत्वेऽपि दिवा सर्वोऽपि नष्टैष एति नष्टं विमुक्तमिच्छतीति नष्टैषः । कर्मण्यण् । विमुक्तमन्विच्छन् गच्छति सर्वत्र ॥

[6]यदित्यादि ॥ प्रातस्सायं च इष्टिधृतिकरणात् अहोरात्राभ्यामेव सहायाभ्यां एनमन्विच्छति । ततो निश्चितो लाभ इति भावः । अथो अपिच अहोरात्राभ्यामेवाश्वस्य योगक्षेमं योगसहितं क्षेमं कल्पयति । प्रातरिष्टिभिर्योगं, सायं धृतिभिः क्षेममिति ॥

इति तृतीये नवमे त्रयोदशोऽनुवाकः.

[1]अप वा एतस्माच्छ्री राष्ट्रं क्रामति । योऽश्वमेधेन यजते । ब्राह्मणौ वीणागाथिनौ गायतः । श्रिया वा एतद्रूपम् । यद्वीणा । श्रियमेवास्मिन्तद्धत्तः । यदा खलु वै पुरुषश्श्रियमश्नुते । वीणाऽस्मै वाद्यते । [2]तदाहुः । यदुभौ ब्राह्मणौ गायेताम् ॥ ५२ ॥ प्रभ्रंशुकाऽस्माच्छ्रीस्स्यात् ।

---

[1]अप वा इत्यादि ॥ राजोपचारवैधुर्यात् श्रीश्च राष्ट्रं च अस्मात् अपक्रामति अध्वर्यवे राज्यप्रदानात् । तस्मात् द्वौ ब्राह्मणौ वीणागाथिनौ गायतः सावित्र्याः इष्टेः स्विष्टकृतः पुरस्तात् गायतः । वीणावादनं वीणागाथः, औणादिकः थः, तद्वन्तौ, तत्साधुकारिणि वा औणादिक इनिप्रत्यये थुगागमः ।

वीणावादनशिल्पज्ञौ षड्जादिस्वरवेदिनौ ।
वृत्तगाथादिनिर्माणनिपुणौ तत्र गायतः ॥

श्रिया वा इति । वीणावादनं श्रिया एव रूपं तस्मात् वीणावादनेनास्मिन् श्रियं धत्तः स्थापयतः तेनापक्रान्ता न भवति । इदानीं श्रिया रूपत्वं वीणावादनस्य समर्थ्यते—यदेति। श्रीमदेकान्तत्वात् न राज्ञः श्रीरपक्रामति ॥

[2]तदाहुरिति ॥ उक्तं दूषयति । ब्राह्मणावेव यदि द्वौ गायेतां श्रीरस्मात् भ्रंशनशीलैव स्यात् । कुत इत्याह—न हि ब्राह्मणे श्रीः रमते सक्ता विधेया न प्रवर्तते तपस्वा-

न वै ब्राह्मणे श्री रमत इति । ब्राह्मणोऽन्यो गायेत् । राजन्योऽन्यः । ब्रह्म वै ब्राह्मणः । क्षत्त्रꣳ राजन्यः । तथा हास्य ब्रह्मणा च क्षत्त्रेण चोभयतश्श्रीः परिगृहीता भवति ।[3] तदाहुः । यदुभौ दिवा गायेताम् । अपास्माद्राष्ट्रं क्रामेत् ॥ ५३ ॥ न वै ब्राह्मणे राष्ट्रꣳ रमत इति । यदा खलु वै राजा कामयते । अथ ब्राह्मणं जिनाति । दिवा ब्राह्मणो गायेत् । नक्तꣳ राजन्यः । ब्रह्मणो वै

---

न्यायविरोधात् त्याज्यत्वात्तस्याः । तस्मात् एको ब्राह्मणः एको राजन्य इति युक्तम् । तथा खलु क्रियमाणे ब्रह्मबलेन क्षत्रबलेन चास्योभयतः उभाभ्यां श्रीः परिगृहीता भवति ॥

[3]तदाहुरिति ॥ तस्मिन्नपि पक्षे विशेषमाहुरित्यर्थः । यदुभौ ब्राह्मणराजन्यौ दिवा गायेतां न केवलं ब्राह्मण एव तदन्यो वा । तदाऽस्मात् राष्ट्रमपक्रामेत् उभयबलपरिग्रहाभावात् । तत्कथमित्याह—न हि ब्राह्मणे राष्ट्रं रमते राजन्यसंनिधावपायात् तस्मान्नित्यसंबन्धि ब्राह्मणे राष्ट्रं न भवति । तदेवाह—यदा खलु वै राजा राष्ट्रं कामयते अथ अनन्तरं ब्राह्मणं राष्ट्रभृजमपि प्रबलो राजन्यो जिनाति क्षपयति च्यावयति राष्ट्रात्। तस्मात् ब्राह्मणे राष्ट्रं न रमते नित्यसंबन्धि न भवति 'ज्या वयोर्हनौ' ग्रहिज्यादिना संप्रसारणम् । तस्मादुभयोस्सहगानस्या-

रूपमहः । क्षत्त्रस्य रात्रिः । तथा ह्यस्य ब्रह्मणा च क्षत्त्रेण चोभयतो राष्ट्रं परिगृहीतं भवति । [4] इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेत् । इष्टापूर्तं वै ब्राह्मणस्य ॥ ५४ ॥ इष्टापूर्तेनैवैनꣳ स समर्धयति । इत्यजिना इत्ययुध्यथा इत्यमुꣳ

---

युक्तत्वात् दिवा ब्राह्मणो गायेत् नक्तं राजन्य इति युक्तम् । ब्राह्मणो हि रूपमहः उज्ज्वलत्वान्निर्भयत्वाच्च । क्षत्रस्य रूपं रात्रिः क्रूरकर्माधिष्ठानत्वात् सभयत्वाच्च । तथा च क्रियमाणे उभाभ्यां राष्ट्रं परिगृहीतं भवति ॥

[4]इत्यददा इत्यादि ॥ दानादिप्रकारविशेषे इतिशब्दः । इत्यददाः—एवं ब्राह्मणेभ्यो गोभूहिरण्यादि दत्तवानसि । इत्ययजथाः—एवं वाजपेयराजसूयद्वादशाहादिभिरिष्टवानसि । इत्यपचः—एवं कुल्माषशाकसूपपायसादीनि ब्राह्मणेभ्योऽन्नानि पक्ववानसि । एवं ईदृशार्थप्रतिपादिनीभिः गाथाभिः संस्कृतैः पदैः ब्राह्मणो गायेत् । इष्टापूर्तयोः ब्राह्मणसंबन्धित्वात् ताभ्यां एनं यजमानं समर्धयति ॥

[5]इत्यजिना इत्यादिना सायंधृतिषु हूयमानासु राजन्यो वीणागाथी गायेत् । इत्यजिनाः—एवं पृथुभरतभगीरथयुधिष्ठिरादिभिस्सुकृतकर्मभिस्समानं शत्रून् क्षपितवानसि । इत्ययुध्यथाः—एवं करिरथतुरगपदातिसमेतः शरचापतोमरकरवालादिभीषणम-

सं॒ग्रा॒मम॑ह॒न्निति॑ राज॒न्य॑ः । यु॒द्धं वै रा॑ज॒न्य॑स्य ।

---

ह्यशूरपरिवृतोऽरिभिस्सह युद्धं कृतवानसि । इत्यमुं संग्रामम- हन्—एवं दुष्यन्तयुधिष्ठिरादिवत् महापुरुषसिंहसहस्रसमधिष्ठितं संग्रामं अमुं काश्मीरं मागधं पौण्ड्रमित्यादीन् निशितासिमात्र- सहायः त्वं हतवानसि । इत्थं राजन्यसंबन्धिना युद्धेन समृ- द्धमेनं करोति ॥

अथ श्लोकैरपि, दानस्य यथा—

सौवर्णीं निष्ककोटिं प्रतिदिनमददास्सादरं ब्राह्मणेभ्यः
ब्रह्मभ्यो वेदविद्भ्यो दिशिदिशि विहिता अग्रहारा * स्समृद्धाः ।
कुण्डोध्नीनां गवामप्यविरतमयुतं ब्राह्मणेभ्यो वितीर्णं
वासोरत्नादिदाने न हि तव गणना भूपचूडामणेऽभूत् ॥

यागस्य यथा—

मखैरयजथा महीक्षतब्रह्मसत्कुरुदक्षिणैः
अविक्षतविधिक्रमैस्समभहीनभेदैस्सदा ।
सवैः पशुभिरिष्टिभिर्विविधनित्यकाम्यात्मभिः
महाक्रतुभिरुज्ज्वलैरपि च राजसूयादिभिः ॥

पाकस्य यथा—

खण्डजीरकघृताम्लसैन्धव-
स्वादुसूपमरिचादिसंस्कृतैः ।
व्यञ्जनैस्सह बहुपदंशकैः
ब्राह्मणार्थमपचस्त्वमोदनम् ॥

---

* स्समग्राः.

युद्धेनैवैनꣳ स समर्धयति । [6]अक्लृप्ता वा एतस्यर्तव इत्याहुः । योऽश्वमेधेन यजत इति । तिस्रोऽन्यो गायति तिस्रोऽन्यः । षट्थ्सम्पद्यन्ते । षड्वा ऋतवः । ऋतूनेवास्मै कल्पयतः । [7]ताभ्याꣳ सꣳस्थायाम् ।

ज्यानेर्यथा—

विषयान् प्रविलुप्य गोधनानां
अपहर्ता त्वमुदारदारहारी ।
विनिवार्य च मङ्गलोपचारान्*
अजिना विहूषितां† महाकुलानि ॥

युद्धस्य यथा—

आकर्षन् मददुर्दिनां गजघटां सिन्दूरसन्ध्यारुणां
उद्गमोत्प्लुतवाजिलोकपिहितव्योमावकाशो भृशम् ।
पादातैर्निशितासिभीषणकरैर्दिङ्मण्डलग्राहिभिः‡
विक्रान्तस्त्वमयुध्यथाः परबलैस्सार्धं महीवासव ॥

वधस्य यथा—

विक्रान्तान् रथगजवाजिलोकजुष्टान्
अक्षोभ्यान् धृतविविधायुधप्रधानान् ।
संग्रामे मगधकलिङ्गवङ्गपूर्वान्
शत्रूंस्त्वं प्रसभमहन् महीमहेन्द्र ॥

[6]अक्लृप्ता वा इत्यादि ॥ ऋतूपचाराणां राज्ञा त्यक्तत्वात् ऋतुधर्माणामुत्सन्नसमत्वात् तत्र गाथानां षट्त्वादृतूनां क्लृप्तिः ॥

[7]ताभ्यामित्यादि ॥ एतानि सावित्रादीनि कर्माणि संवत्सरं क्रियन्ते संवत्सरश्च समाप्तो भवति षष्ट्यधिकशतत्रयदिवसः । तस्य

* हारान्. † त्वाद्विषता. ‡ प्रासिभिः.

अनोयुक्ते च शते च ददाति । [8]शतायुः पुरुषश्शतेन्द्रियः । आयुष्येवेन्द्रिये प्रतितिष्ठति ॥ ५५ ॥

गायेतां कामेद्ब्राह्मणस्य कल्पयतश्च
त्वारि च ॥ १४ ॥

[1]सर्वेषु वा एषु लोकेषु मृत्यवोऽन्वायत्ताः । तेभ्यो यदाहुतीर्न जुहुयात् । लोकेलोक एनं मृत्युर्विन्देत् । मृत्यवे स्वाहा मृत्यवे स्वाहेत्यभिपूर्वमाहुतीर्जुहोति । लोकाल्लोकादेव मृत्युमवयजते ।

---

संवत्सरस्य संस्थायां समाप्तौ ताभ्यां वीणागाथिभ्यां अनोयुक्ते अनसि शकटे युक्ते बद्धे द्वे गावौ शते च गवां शतद्वयं च ददाति ॥

[8]शतायुरित्यादि ॥ गतम् ॥

इति तृतीये नवमे चतुर्दशोऽनुवाकः.

---

[1]सर्वेषु वा इत्यादि ॥ सर्वेष्वपि लोकेषु मृत्यवो मरणहेतवो व्याध्यादयः अन्वायत्ताः अनुप्रविश्य स्थिताः । तेभ्य आहुत्यकरणे स्थानेस्थाने मृत्युः एनं अश्वमेधयाजिनं विन्देत् असहमान इव बाधेत । तस्मात मृत्यवे स्वाहा मृत्यवे स्वाहेति सर्वस्थानस्थाय मृत्यवे अभिपूर्वं अनुक्रमेण आहुतीर्जुहोति अवभृथे । सर्वस्मात् स्थानात् मृत्युमवयजते नाशयति ततः क्वचिदपि स्थाने नैनं मृत्युः गृह्णाति ॥

नैनं लोकेलोके मृत्युर्विन्दति। [2]यदमुष्मै स्वाहाऽमुष्मै स्वाहेति जुह्वत्संचक्षीत । बहुं मृत्युममित्रं कुर्वीत । मृत्यवे स्वाहेत्येकस्मा एवैकां जुहुयात्। एको वा अमुष्मिन्लोके मृत्युः ॥ ५६ ॥ अशनया मृत्युरेव । तमेवामुष्मिन्लोकेऽवयजते । [3]भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति । भ्रूणह-

[2]यदित्यादि ॥ यदि मृत्युविशेषाणां ज्वरयक्ष्मशूलादीनां नाम गृहीत्वा 'ज्वराय स्वाहा, यक्ष्मणे स्वाहा, शूलाय स्वाहेति' जुह्वत् होमं कुर्वन् संचक्षीत संकीर्तयेन्मृत्युनामानि तदा बहुं अनेकं मृत्युं स्वस्य अमित्रं शत्रुं कुर्वीत स्थापयेत् । ततस्तेन शत्रुत्वेन कीर्तिता मृत्युप्रकारास्सर्वेऽपि ज्वरादयः एनं शत्रुत्वेन बाधेरन् । तस्मादनेकामित्रत्वं मा प्रसाङ्क्षीदिति मृत्यवे स्वाहेति सकृदेव विशेषनाम संकीर्त्य एकामेवाहुतिं जुहुयात् तत्र अमुष्मिन् अपि लोके प्रसिद्धो य एको मृत्युः स एव अनया आहुत्या अवेष्टो भवति । अस्मिंश्च लोके स एवाशनया मृत्युरेकः प्रबलः प्रसिद्धः, तस्मिंश्चावेष्टे सर्वे मृत्यवोऽवेष्टा भवन्ति तन्निदानत्वात्सर्वेषाम् । अशनेच्छा अशनया क्षुत् 'अशनायोदन्या' इति निपात्यते । छान्दसं ह्रस्वत्वम् । क्षुदुपहतं अपथ्यसेविनं मृत्यवो बाधन्ते ॥

[3]भ्रूणहत्यायै स्वाहेति द्वितीयाहुतिरवभृथे । तया भ्रूणहत्यालक्षणो मृत्युश्चावेष्टो भवति । त्रिवेदविद्वधो गर्भिणीवधो

त्यामेवावं यजते । [4]तदाहुः । यद्भ्रूणहत्याऽपा-त्र्याऽथं । कस्माद्यज्ञेऽपि क्रियत इति । [5]अमृ-त्युर्वा अन्यो भ्रूणहत्याया इत्याहुः । भ्रूणहत्या वाव मृत्युरिति । यद्भ्रूणहत्यायै स्वाहेत्यवभृथ आहुतिं जुहोति ॥ ५७ ॥ मृत्युमेवाहुत्या तर्पयित्वा

---

वा भ्रूणहत्या ॥

[4]तदाहुरिति ॥ तत्र चोदयन्ति—यद्येवं नाम भ्रूणहत्या अपात्र्या पुरुषस्यापात्रीकरणमर्हति । रक्षकं पात्रं तद्विपरीतमपात्रं अयोग्यं तत्करणमर्हतीति अपात्रात् 'छन्दसि च' इति यः, 'पात्रात् घंश्च' इति वा । तदन्तादपि भवति । इकारोपजनच्छान्दसः । घन्नेव वा । तदन्तादपि भवति । अथ कस्मात् कारणात् भ्रूणहत्याहुतिर्यज्ञेऽपि क्रियते? ननु यज्ञारम्भ एव क्षाळितसर्वपापो ह्यश्वमेधेऽधिक्रियते तत्र कूश्माण्डादिवत् कर्मादावेवेयं कर्तव्या * न यज्ञमध्य इति यज्ञविदश्चोदयन्ति ॥

[5]उत्तरं—अमृत्युर्वा इति ॥ भ्रूणहत्यामवेक्ष्य अन्यदेनः अमृत्युः अबाधकं भ्रूणहत्यैव मृत्युस्थानीया अलङ्घनीयविनिपातत्वात् । अश्वमेधावभृथाहुतिमन्तरेणेयं नोपशाम्यतीति मृत्यूनामवयजनस्थाने अस्या अपि मृत्युत्वाद्धोमः क्रियत इति न कूश्माण्डादिवदियं कर्मादौ होतव्या । उक्तं च—'यदर्वाचीनमेनो भ्रूणहत्यायाः' † इति । तस्मादवभृथे भ्रूणहत्याहुत्या मृत्युं तर्प-

---

* वेवेदं कर्तव्यं. † आ-२-८.

परिपाणं कृत्वा । भ्रूणघ्ने भेषजं करोति । [6]एताꣳ ह वै मुण्डिभ औदन्यवः । भ्रूणहत्यायै प्रायश्चित्तिं विदाञ्चकार । यो हास्यापि प्रजायां ब्राह्मणꣳ हन्ति । सर्वस्मै तस्मै भेषजं करोति । [7]जुम्बकाय स्वाहेत्यवभृथ उत्तमामाहुतिं जुहोति । वरुणो वै जुम्ब-

यित्वा परिपाणं सर्वतःपानं पातृत्वमस्य कृत्वा । 'कृत्यचः' इति णत्वम् । यद्वा—परिपाणं परिपणनं आहुतिप्रदानेन निष्क्रयमिवास्य मृत्योः कृत्वा भ्रूणघ्ने भेषजं सर्वोपद्रवशमनं करोति । उदात्तनिवृत्तिस्वरेण चतुर्थ्या उदात्तत्वम् । पातेर्ल्युटि उत्तरपदप्रकृतिस्वरत्वेन लट्स्वरः । पक्षान्तरे 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् ॥

[6]एतां हेति ॥ उदकमात्मन इच्छतीत्युदन्युः तस्यापत्यमौदन्यवः मुण्डिभो नाम भ्रूणहत्यायाः प्रायश्चित्तिमेतामाहुतिं विदांचकार वेत्ति स्म । 'उषविदजागृभ्यः' इति आंप्रत्ययः । अदन्तत्वाद्विदेर्गुणाभावः । यो हेति । तिष्ठतु मुण्डिभः, वयं तु मन्यामहे । अस्य अश्वमेधयाजिनः प्रजायाम् । जातावेकवचनम् । प्रजास्वपि मध्ये यो नाम कश्चित्प्रमादात् ब्राह्मणं हन्ति अस्मै सर्वस्मा अपि भेषजं करोति अनयाऽऽहुत्या शुद्धिं करोति, किं पुनरस्मा अश्वमेधयाजिन इति ॥

[7]अथ जुम्बकाय स्वाहेत्युत्तमां तृतीयामाहुतिं जुहोति । वरुणपाशात्मकमृत्युमपि अन्ततोऽवसाने अवयजते अपनयति । जुबि वर्जने ॥

कः । अन्तत एव वरुणमवयजते । [8]खलतेर्विक्लि-
धस्य शुक्लस्य पिङ्गाक्षस्य मूर्धञ्जुहोति । एतद्वै वरु-
णस्य रूपम् । रूपेणैव वरुणमवयजते ॥ ५८ ॥

लोके मृत्युर्जुहोति मूर्धञ्जुहोति द्वे च ॥ १५ ॥

[1]वारुणो वा अश्वः । तं देवतया व्यर्धयति ।
यत्प्राजापत्यं करोति । नमो राज्ञे नमो वरुणाये-
त्याह । वारुणो वा अश्वः । स्वयैवैनं देवतया
समर्धयति । नमोऽश्वाय नमः प्रजापतय इत्याह ।
प्राजापत्यो वा अश्वः । स्वयैवैनं देवतया समर्ध-

[8] 'खलतेरिति ॥ खलतिरलोममस्तकः, विक्लिधो विक्लिन्नः स्वेदनशीलशरीरः विक्लिन्नाक्ष इति केचित् । शुक्लः श्वित्रिः, पिङ्गाक्षः पिङ्गलनेत्रः । तस्य शिरसि एतास्तिस्र आहुतीर्जुहोति । श्वेतरूपेण[1] सह वरुणोऽपनीतो भवति ॥

इति तृतीये नवमे पञ्चदशोऽनुवाकः.

---

[1]वारुणो वा इत्यादि ॥ अप्सुयोनित्वाद्वारुणः । स यदि प्राजापत्यस्स्यात् स्वया देवतया तं व्यर्धयेत् वियोजयेत् । वारुण्या आहुत्या निजदेवतासमृद्धिः । प्राजापत्यया चात्मीयदेवतासमृद्धिः, अश्वस्य प्रजापत्यक्षिपरिणामत्वेन प्राजापत्यत्वात् ॥

[1] विक्लिन्नश्वेतपिङ्गल्यादिरूपेण. पा.

यति । [2]नमोऽधिपतय इत्याह ॥ ५९ ॥ धर्मो वा अधिपतिः । धर्ममेवावरुन्धे । अधिपतिरस्यधिपतिं मा कुर्वधिपतिरहं प्रजानां भूयासमित्याह । अधिपतिमेवैनꣳ समानानां करोति । मां धेहि मयि धेहीत्याह । आशिषमेवैतामाशास्ते । उपाकृताय स्वाहेत्युपाकृते जुहोति । आलब्धाय स्वाहेति नियुक्ते जुहोति । हुताय स्वाहेति हुते जुहोति । एषां लोकानामभिजित्यै ॥ ६० ॥ [3]प्र वा एष एभ्यो लोकेभ्यश्च्यवते । योऽश्वमेधेन यजते । आग्नेयमैन्द्राग्नमाश्विनम् । तान्पशूनालभते प्रतिष्ठित्यै । यदाग्नेयो भवति । अग्निस्सर्वा देवताः । देवता एवावरुन्धे । ब्रह्म वा अग्निः । क्षत्त्रमिन्द्रः । यदै-

[2] धर्मो वा इति ॥ अधिकं पाता धर्म एवोक्ते । अधिपतिरसीत्यादि । गतम् । आशिषमिति । यथाशासनं संपद्यत एवेति यावत् । उपाकृत इति । देवतायै संकल्पितेऽश्वे जुहोति । नियुक्ते यूपे बद्धे । हुते अग्नौ । इष्टिहोमत्रयेण लोकत्रयलाभः ॥

[3] प्र वा एष इत्यादि ॥ क्षीण[1]कर्मतया लोकाधारभोगादृष्टाभावादेभिर्लोकैः बद्धो न स्यात् । आग्नेयमित्यादि । पार्थिवते कर्मणि आग्नेयादिपशुत्रयालम्भात् प्रतिष्ठितो भवति । यदि-

[1] आहुतित्रयलब्धलोकेभ्यः क्षीण.

न्द्राग्नो भवति ॥ ६१ ॥ ब्रह्मक्षत्रे एवावरुन्धे । यदाश्विनो भवति । आशिषामवरुद्ध्यै । त्रयो भवन्ति । त्रयं इमे लोकाः । एष्वेव लोकेषु प्रतितिष्ठति । [4]अग्नयेऽꣳहोमुचेऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति । दशाक्षरा विराट् । अन्नं विराट् । विराजैवान्नाद्यमवरुन्धे । [5]अग्नेर्मन्वे प्रथमस्य प्रचेतस इति याज्यानुवाक्या भवन्ति सर्वत्वाय ॥

अधिपतय इत्याहाभिजित्या ऐन्द्राग्नो भवति रुन्ध एकं च ॥ १६ ॥

त्यादि । गतम् । अग्नीन्द्राभ्यां सह जातत्वात्ताच्छब्द्यम् । ब्रह्मक्षत्रे वशीकरोति । आश्विनेनेष्टलाभः । अनिष्टोपशमनस्य तदधीनत्वात् । देवतानां त्रित्वात्त्रिलोके प्रतिष्ठितो भवति ॥

[4]अग्नयेंऽहोमुच इत्यादि ॥ तेषां आग्नेयादीनां पशुपुरोडाश प्रचरणानन्तरं* एतां दशहविषं मृगारेष्टिमनुनिर्वपति । दशाक्षरेत्यादि । गतम् ॥

[5]अग्नेर्मन्वे † इत्येतास्तेषां हविषां याज्यानुवाक्याः स्विष्टकृतोऽन्त्ये सर्वत्वाय सर्वदेवताराधनेनाभिमतार्थसाकल्याय तद्भवति सर्वदेवतागुणकीर्तनत्वादासाम् । यद्वा—प्राकृतपरित्यागेन स्विष्टकृत्सहितानां हविषामत्रैव याज्यानुवाक्याम्नानं अभिमतानां पौष्कल्याय भवति ॥

इति तृतीये नवमे षोडशोऽनुवाकः.

---

* करणानन्तरं. पा. † सं. ४-७-१५.

[1]यद्यश्वमुपतपद्विन्देत् । आग्नेयमष्टाकपालं निर्वपेत् । सौम्यं चरुम् । सावित्रमष्टाकपालम् । यदाग्नेयो भवति । अग्निस्सर्वा देवताः । देवताभिरेवैनं भिषज्यति । यथ्सौम्यो भवति । सोमो वा ओषधीनाꣳ राजा । याभ्यं एवैनं विन्दति ॥६ ३॥ ताभि रेवैनं भिषज्यति । यथ्सावित्रो भवति । सवितृप्रसूत एवैनं भिषज्यति । एताभिरेवैनं देवताभिर्भिषज्यति । अगदो हैव भवति । [2]पौष्णं चरुं निर्वपेत । यदि श्लोणस्स्यात् । पूषा वै श्लौण्यस्य भिषक् । स एवैनं भिषज्यति । अश्लोणो हैव भ-

---

[1]यद्यश्वमिति ॥ उपतपत् व्याधिविशेषः । भिषज्यति अरोगं करोति । याभ्य इति । उपपन्नो व्याधिः एनं अश्वं विन्दति। ताभिरेवौषधीभिरेनमश्वं भिषज्यति । ओषधीनां प्रातिकूल्याद्व्याधिरुपजायते, आनुकूल्यादुपशाम्यति । सवितृप्रसूतः सवित्राऽनुज्ञातः । अगदः अरोगः ॥

[2]श्लोणो दुष्टत्वक् । महती देवता पशूनां पतिः* यस्मिन् अभिमन्यमाने ज्वरादिना पीड्यते । एतद्देवत्यो महादेवदेवत्योऽश्वः सर्वपशूनां पतित्वात् ॥

---

* पशुपतिर्महादेवः पा.

वति ॥६४॥ रौद्रं चरुं निर्वपेत् । यदि महती देवताऽभिमन्येत । एतद्देवत्यो वा अश्वः । स्वयै- वैनं देवतया भिषज्यति । अगदो हैव भवति । [3]वैश्वानरं द्वादशकपालं निर्वपेन्मृगाखरे यदि ना- गच्छेत् । इयं वा अग्निर्वैश्वानरः । इयमेवैनमर्चि- र्भ्यां परिरोधमानयति । आहैव सुत्यमहर्गच्छति। [4]यद्यधीयात् ॥६५॥ अग्नयेऽंहोमुचेऽष्टाकपालः । सौर्यं पयः । वायव्यं आज्यभागः । यजमानो वा अश्वः । अंहसा वा एष गृहीतः । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । यदंहोमुचे निर्वपति ।

---

[3]मृगाखरे निजनिवासस्थाने सायं यदि नागच्छेत, इयं पृ थिव्येव स्वयं वैश्वानरः तस्मात् इयं एव एनं अश्वं अ र्चिभ्यां ः ज्वालाभ्यां परिरोधं सर्वतो निरुद्ध्य आनयति । ततस्सुत्यमहरागच्छत्येव सर्वथा न् तनो वि म्बते ॥

[4]अधीयात् ॥ बडवां गर्दभीं वा चिन्तयेत् आरोहेद्वा, यजमानस्स्वयमश्वः प्राधान्यात्, तस्मात् यस्य यजमानस्य मे- धाय यज्ञाय प्रोक्षितोऽश्वोऽध्येति बडवां, एष ह्यंहसा गृहीतः, तस्मात् अंहोमुचे निर्वापात् गृहीतांहसा विमुक्तो भवति ॥

अꣳहस एव तेन मुच्यते । [5]यजमानो वा अश्वः। रेतसा वा एष व्यृद्ध्यते ॥ ६६॥ यस्याश्वो मेधाय प्रोक्षितोऽध्येति । सौर्यꣳ रेतः । यथ्सौर्यं पयो भवति । रेतसैवैनꣳ स समर्धयति । [6]यजमानो वा अश्वः । गर्भैर्वा एष व्यृद्ध्यते । यस्याश्वो मेधाय प्रोक्षितोऽध्येति । वायव्या गर्भाः । यद्वायव्यं आज्यभागो भवति । गर्भैरेवैनꣳ स समर्धयति । अथो यस्यैषाऽश्वमेधे प्रायश्चित्तिः क्रियते । इष्ट्वा वसीयान्भवति ॥६७॥

विन्दत्यश्लोणो हैव भवत्यधीयादृद्ध्यते गर्भैरेवैनꣳ स समर्धयति द्वे च ॥१७॥

---

[5]सौर्यं रेतः वृष्ट्यादिद्वारेण तेनोत्पादितत्वात् ॥

[6]वायव्या गर्भाः तत्प्रेरणभवत्वात् ॥

[7]अथो अपि च एतत्प्रायश्चित्तिकरणेनेष्ट्वा यागोत्तरं वसीयान् वसुमत्तरो भवति । अकरणे केवलेन यागेन वसुमान्, करणे वसुमत्तर इति विवेकः । उपकृतमेवाश्वेन, योऽध्येतीति भावः। वसीयश्शब्दो व्याख्यातः ॥

इति तृतीये नवमे सप्तदशोऽनुवाकः.

[1]तदाहुः । द्वादश ब्रह्मौदनान्थ्सꣳस्थिते निर्वपेत् । द्वादशभिर्वेष्टिभिर्यजेतेति । यदिष्टिभिर्यजेत । उपनामुक एनं यज्ञस्स्यात् । पापीयाꣳस्तु स्यात् । [2]आम्नानि वा एतस्य छन्दाꣳसि । य ईजानः । तानि क एतावदाशु पुनः प्रयुञ्जीतेति । सर्वा वै सꣳस्थिते यज्ञे वागाप्यते ॥ ६८ ॥ साऽऽप्ता भवति यातयाम्नी । क्रूरीकृतेव हि भवत्यरुष्कृता । सा

[1]तदाहुः याज्ञिका विकल्पं—संस्थिते समाप्तेऽश्वमेधे गृहं गत्वा द्वादश ब्रह्मौदनान्निर्वपेत्, इष्टिभिर्वा द्वादशभिर्यजेत सर्वेऽप्याग्नेयाष्टाकपाला इत्याहुः । एतद्दूषयति—यदित्यादि ॥ इष्टिपक्षो दूष्यते । यदिष्टिभिर्यजेत एनं यज्ञ उपनामुकस्स्यात् अस्मिन् सदा उपनमनशीलस्स्यात्, यज्ञः फलतीति भावः । यज्ञफलं एनं न जहात्यत्र । किं तर्हीति—पापीयांस्तु स्यात् पापतरो भवति । कस्यचिदप्यकरणे पापः इष्टिकरणे पापतरः ब्रह्मौदनकरणे अपाप इति भावः ॥

[2]अथ पापीयस्त्वमेव प्रतिपादयति—आम्नानीत्यादि ॥ य ईजानः समाप्तयागस्तस्य सर्वाणि छन्दांस्यपि हि आम्नानि उपयुक्तानि भवन्ति । तानि तादृशानि एतावदाशु एतावत्प्रमाणं शैघ्र्यं यत्र तादृशमतिक्षिप्रं कः पुनः प्रयुञ्जीत प्रयोक्तुमर्हति अयुक्तमेतदिति यावत् । इतिशब्दो हेतौ । किंच—संस्थिते यज्ञे सर्वा वागाप्यते कृतप्रयोजना उपयुक्ता वर्तते ।

न पुनः प्रयुज्येत्याहुः । द्वादशैव ब्रह्मौदनान्थ्सꣳस्थिते निर्वपेत् । [3]प्रजापतिर्वा ओदनः । यज्ञः प्रजापतिः । उपनामुक एनं यज्ञो भवति । न पापीयान्भवति । द्वादश भवन्ति । द्वादश मासास्संवथ्सरः । संवथ्सर एव प्रतितिष्ठति ॥६१॥

आप्यते संवथ्सर एकं च ॥ १८ ॥

[1]एष वै विभूर्नाम यज्ञः । सर्वꣳह वै तत्र विभु भवति । यत्रैतेन यज्ञेन यजन्ते । एष वै प्रभूर्ना-

---

सा च तथाभूता यातयाम्नी आत्तसारा भवति । तस्मात् सा अरुष्कृता पिष्टपेषणस्थानीयेन पुनः प्रयोगपीडनेन बाधिता क्रूरीकृतेव हि भवति हिंसकस्वभावतां नीतेव भवति । तस्मात् सा न पुनः प्रयुज्या तदानीमेव न पुनः प्रयोक्तव्येत्याहुर्वेदार्थविदः । छान्दसः क्यप् । तस्मात् ब्रह्मौदनानेव द्वादश निर्वपेत् ॥

[3] ननु अस्मिन्नपि पक्षे उक्तदोषप्रसङ्ग इत्याह प्रजापतिर्वा इति ॥ सर्वोत्पत्तिहेतुत्वात् स्वयं प्रजापतिरेवौदनः, प्रजापतिर्नाम यज्ञ एव, प्रजापतिश्च सर्वार्थकृदिति न कश्चिद्दोषः । द्वादशत्वयोगात् संवत्सरे प्रतिष्ठितो भवति ॥

इति तृतीये नवमे अष्टादशोऽनुवाकः.

---

[1]एष वा इत्यादि ॥ ब्रह्मौदनस्तुतिरिति केचित् । अश्वमेधस्तुतिरित्यन्ये । विविधं भावयिता श्रेयसां विभुः । ण्यन्तात्क्विपि

र्मं य॒ज्ञः । सर्व॑ꣳ ह॒ वै तत्र॑ प्र॒भु भ॑वति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वा ऊ॒र्जस्वा॒न्नाम॑ य॒ज्ञः । स- र्व॑ꣳ ह॒ वै तत्रो॒र्जस्व॑द्भवति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै पय॑स्वा॒न्नाम॑ य॒ज्ञः ॥ ७० ॥ सर्व॑ꣳ ह॒ वै तत्र॒ पय॑स्वद्भवति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै विधृ॑तो॒ नाम॑ य॒ज्ञः । सर्व॑ꣳ ह॒ वै तत्र॒ विधृ॑तं भ- वति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै व्यावृ॑त्तो॒ नाम॑ य॒ज्ञः । सर्व॑ꣳ ह॒ वै तत्र॒ व्यावृ॑त्तं भवति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै प्रति॑ष्ठितो॒ नाम॑ य॒ज्ञः । सर्व॑ꣳ ह॒ वै तत्र॒ प्रति॑ष्ठितं भवति ॥ ७१ ॥ यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै तेज॒स्वी नाम॑ य॒- ज्ञः । सर्व॑ꣳ ह॒ वै तत्र॑ तेज॒स्वि भ॑वति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै ब्र॑ह्मवर्च॒सी नाम॑ य॒ज्ञः । आह॒ वै तत्र॑ ब्राह्म॒णो ब्र॑ह्मवर्च॒सी जा॑यते । यत्रै॒-

---

'बहुळमन्यत्रापि' इति णिलुक् । यस्मिन्देशे एतेन यज्ञेन यजन्ते तत्र सर्वं गवादिकमपि विभु भवति । एवं सर्वत्र ॥ प्रकृष्टं भावयिता प्रभुः । उर्जस्वान् अन्नवान्[1] । पयस्वान् रसवान् । विधृतो विशेषेण धृतः व्यवस्थितस्वभावः फलैकान्तः । व्यावृत्तः

---

[1] बलवान्, पा.

तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वा अ॑तिव्या॒धी नाम॑ य॒ज्ञः । आह॒ वै तत्र॑ रा॒ज॒न्यो॑ऽतिव्या॒धी जा॑यते । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै दी॒र्घो नाम॑ य॒ज्ञः। दी॒र्घायु॑षो ह॒ वै तत्र॑ म॒नु॒ष्या॑ भवन्ति । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते । ए॒ष वै क्लृ॒प्तो नाम॑ य॒ज्ञः । क॒ल्पते ह॒ वै तत्र॑ प्र॒जाभ्यो॑ योगक्षे॒मः । यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते ॥ ७२ ॥

पय॑स्वा॒न्नाम॑ य॒ज्ञः प्रति॑ष्ठितं भवति॒ यत्रै॒तेन॑ य॒ज्ञेन॒ यज॑न्ते॒ षट् ॥ १९ ॥

ए॒ष वै वि॒भूः प्र॒भूरू॒र्जस्वा॒न्पय॑स्वा॒न्विधृ॑तो॒ व्या॒वृत्तः॒ प्रति॑ष्ठितस्ते॒ज॒स्वी ब्र॑ह्मव॒र्च॒स्य॑तिव्या॒धी दी॒र्घः क्लृ॒प्तो द्वादश ॥

इतरस्माद्विलक्षणः । प्रतिष्ठितः अविचलः । तेजस्वी ख्यातिमान् । ब्रह्मवर्चसी ब्राह्मण[1]बलवान् । अतिव्याधी अनिष्टानामत्यर्थं वेद्धा[2] । दीर्घो दीर्घफलः । क्लृप्तः संपन्नः । तस्मात् प्रजाभ्यस्संपद्यते योगक्षेमः । योगसहितः क्षेमः योगक्षेमः । अलब्धलाभो योगः, लब्धपरिपालनं क्षेमः ॥

इति तृतीये नवमे एकोनविंशोऽनुवाकः.

---

[1] ब्राह्मण्य.

[2] व्यद्धा. पा.

[1]तार्प्येणाश्वꣳ संज्ञपयन्ति । यज्ञो वै तार्प्यम् । यज्ञेनैवैनꣳ समर्धयन्ति । यामेन साम्ना प्रस्तोताऽनूपतिष्ठते । यमलोकमेवैनं गमयति । [2]तार्प्ये च कृत्यधीवासे चाश्वꣳ संज्ञपयन्ति । एतद्वै पशूनाꣳ रूपम् । रूपेणैव पशूनवरुन्धे । हिरण्यकशिपु भवति । तेजसोऽवरुद्ध्यै ॥७३॥ रुक्मो भवति । सुवर्गस्य लोकस्यानुख्यात्यै । अश्वो भवति । प्रजापतेराप्त्यै । [3]अस्य वै लोकस्य रूपं तार्प्यम् ।

---

[1]तार्प्येणेत्यादि ॥ तार्प्यं घृताक्तं कम्बळं तेन संज्ञपयन्ति मारयन्ति । 'ज्ञप मारणादौ' । यज्ञो वा इति । प्रधानसाधनत्वात् । यामेन यमसंबन्धिना पितृमेधप्रयोज्येन अनूपतिष्ठते । संज्ञप्यमानमश्वं पार्श्वत उपतिष्ठते ॥

[2]तार्प्ये चेत्यादि ॥ तार्प्यं प्रथमं संस्तीर्य, तत उपरि कृत्यधीवासं कृत्यात्मकमधिवासं छादनपटमास्तीर्य, तत उपरि हिरण्यकशिपु हिरण्मयं कशिपु आस्तरणपटमास्तीर्य, तत उपरि रुक्मं शतपलिकं स्वर्णशकलं निधाय, तत उपरि अश्वं संज्ञपयन्ति ॥

[3]अस्य लोकस्य रूपं तार्प्यं अधोभावात् । कृत्यधीवासोऽन्तरिक्षस्य रूपं द्वितीयत्वात् । दिवो रूपं हिरण्यकशिपु तृती-

अ॒न्तरि॑क्षस्य कृत्यधीवा॒सः । दि॒वो हिर॑ण्यकशि॒पु । आ॒दि॒त्यस्य॑ रु॒क्मः । प्र॒जाप॑ते॒रश्वः॑ । इ॒मम॒व लो॒कं ता॒र्प्येणा॑प्नोति ॥ ७४ ॥ अ॒न्तरि॑क्षं कृत्यधीवा॒सेन॑ । दिव॑ꣳ हिर॑ण्यकशि॒पुना॑ । आ॒दि॒त्यꣳ रु॒क्मेण॑ । अश्वे॑नै॒व मेध्ये॑न प्र॒जाप॑ते॒स्सायु॑ज्यꣳ स॒लोक॑तामाप्नोति । ए॒तासा॑मे॒व दे॒वता॑ना॒ꣳ सायु॑ज्यम् । सा॒र्ष्टिता॑ꣳ समानलो॒कता॑माप्नोति । यो॑ऽश्वमे॒धेन॒ यज॑ते । य उ॑ चैनमे॒वं वेद॑ ॥ ७५ ॥

अव॑रुद्ध्या आप्नो॒त्य॒ष्टौ च॑ ॥ २० ॥

यत्वात् । आदित्यस्य रूपं रुक्मः रोचनशीलत्वात् । प्रजापतेः रूपमश्वः प्रजापत्यक्षिपरिणामत्वात् । सायुज्यं सयुक्त्वं ऐक्यम् । सलोकतां समानलोकताम् । एतासामेव देवतानां सायुज्यमैक्यम् । सार्ष्टितां समानवीर्यत्वं समानलोकतां चाप्नोति । योऽश्वमेधेन यजते, यश्चैनं एवंमहिमानं वेदैव न यजते सोऽप्युक्तफलभागिति । ऋच्छ गतीन्द्रियप्रळयमूर्तिभावेषु, क्तिनि समानस्य सभावः, वर्णविकारश्छान्दसः ॥

इति तृतीये नवमे विंशोऽनुवाकः.

[1]आदित्याश्चाङ्गिरसश्च सुवर्गे लोकेऽस्पर्धन्त । तेऽङ्गिरस आदित्येभ्यः । अमुमादित्यमश्वꣳ श्वेतं भूतं दक्षिणामनयन् । तेऽब्रुवन् । यं नोऽनैष्ट । स वर्योऽभूदिति । तस्मादश्वꣳ सवर्येत्याह्वयन्ति । तस्माद्यज्ञे वरो दीयते । [2]यत्प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वो नाम ॥ ७६ ॥ यच्छ्वयदरुरासीत् । तस्मादर्वा नाम । यथ्सद्यो वाजान्थ्सम-

[1]आदित्याश्चेत्यादि ॥ सुवर्ग इति निमित्तात्सप्तमी । अमुमिति । असौ दृश्यमान आदित्यः श्वेतोऽश्वोऽभवत् । तं तथाभूतं आदित्यात्मानं अश्वं आदित्येभ्यो दक्षिणामनयन्नङ्गिरसः। अथ त आदित्या अब्रुवन्—यमश्वं नोऽस्माकं अनेष्ट नीतवन्तः स्थ स वर्यो वरणीयोऽभूत् भवत्विति । छान्दसो लुङ् । तस्मादश्वं सान्त्वनादौ सवर्येत्याह्वयन्ति । वर्यैरुत्कृष्टैर्गुणैस्सहितः सवर्य इति भावः । यस्मादेवमङ्गिरोभिः दत्तस्याश्वस्य वरणीयत्वमभूत् तस्माद्यज्ञे वरो वरणीयं द्रव्यं दक्षिणात्वेन दीयते ॥

[2]यदित्यादि ॥ देवैरालब्धः प्रजापतिः यस्मादश्वोऽभवत् तस्मादश्व आसीत् प्रजापतिरश्वत्वाद्व्यापकत्वादश्व इति भावः । 'अशू व्याप्तौ' औणादिकः क्वन्प्रत्ययः । यच्छ्वयदिति । 'प्रजापतेरक्ष्यश्वयत्'* इति यस्मात्तस्याक्षि श्वयत् शूनं भवत् अरुर्व्यथाहेतुरासीत तस्मादर्वाऽभवदश्वः । अर्तेरुसि अरुः । तत एव

*सं. ५-३-१२.

जंयत् । तस्माद्वाजी नाम॑ । यदसु॑राणां लोकाना-
दत्त । तस्मादादित्यो नाम॑ । [3]अ॒ग्निर्वा अश्व॑मे॒धस्य॒
योनि॑रा॒यत॑नम् । सू॒र्यो॑ऽग्नेर्यो॑निरा॒यत॑नम् । यदश्व-
मे॒धेऽग्नौ चित्यं उत्तरवे॒दिमु॒प॒वप॑ति । योनिमन्तमे॒-
वैनमा॒यत॑नवन्तं करोति ॥ ७७॥ योनिमाना॒यत॑-
नवान्भवति । य ए॒वं वेद॑ । [4]प्रा॒णा॒पा॒नौ वा ए॒तौ

वनिपि अर्वा । यत्सद्य इति । सद्यः जातमात्र एव वा-
जान् अन्नानि समजयत् आजिजयेनाहरत् तस्मात् वाजी अ-
न्नवान् । आदित्य इति । असुरैरार्जितान् लोकान् अश्व
आदित्यो भूत्वा असुरान् जित्वा देवार्थमादत्त तस्मादादाना-
दादित्यः । आदानमादितिः । छान्दसमित्त्वम् । तदर्हतीति
'छन्दसि च' इति यः ॥

[3]अश्वमेधस्याग्नियोनिः कारणं, तेनात्मलाभात् आयतनं स्थानं च अग्निरश्वमेधस्य, अग्निं चित्वा तत्र करणात् । तस्याप्यग्नेः सूर्यो योनिः 'सूर्यस्त्वा पुरस्तात्पातु'* इति मन्त्रात् । तदधीनत्वादग्नेः सूर्य आयतनं 'उद्यन्तं वावाऽऽदित्यमग्निरनु समारोहति'† इति दर्शनात् । तत्र चित्येऽग्नौ उत्तरवेद्युपवपनादुपस्थानात् एनं उत्तरवेद्यां क्रियमाणमश्वमेधं योनिमन्तं आयतनवन्तं च करोति । एवं वेदिता च तथा भवति ॥

[4]अथ 'सूर्योऽग्नेर्योनिः' इति यदुक्तं तत्प्रयोजनमाह—प्राणापा-

* सं. १-१-११.　　　† ब्रा. २-१-२.

देवानाम् । यदर्काश्वमेधौ । प्राणापानावेवावरुन्धे। ओजो बलं वा एतौ देवानाम् । यदर्काश्वमेधौ । ओजो बलमेवावरुन्धे । [5]अग्निर्वा अश्वमेधस्य योनिरायतनम् । सूर्योऽग्नेर्योनिरायतनम् । यदश्वमेधेऽग्नौ चित्यं उत्तरवेदिं चिनोति । तावर्काश्वमेधौ। अर्काश्वमेधावेवावरुन्धे । अथो अर्काश्वमेधयोरेव प्रतितिष्ठति ॥ ७८॥

नाम करोति सूर्योऽग्नेर्योनिरायतनं
चत्वारि च ॥ २१॥

नाविति ॥ देवानां प्राणापानस्थानीयावर्काश्वमेधौ आदित्यश्चाग्निश्च। अर्क आदित्यः, अश्वमेधोऽग्निः । कारणे कार्यशब्दः । तयोरुपरि अश्वमेधस्य कर्ता प्राणापानावरुन्धे । ओजो बलस्थानीयादोजो बलावरोध ॥

[5]कौ पुनरर्काश्वमेधौ? को वा तयोरर्काश्वमेधान्वयः? इत्याह— अग्निर्वा इत्यादि ॥ व्याख्यातम् । तत्र चित्याग्नेरुपर्युत्तरवेदिचित्यात्मनोऽग्नेः करणात् द्वौ चित्याग्नी अर्काश्वमेधौ भवतः। तयोरुपरि यजनादग्न्यादित्ययोरवरोधो विधेयीकरणम् । अपि च तयोः प्रतिष्ठितश्च भवति ॥

इति तृतीये नवमे एकविंशोऽनुवाकः.

प्रजापतिं वै देवाः पितरम् । पशुं भूतं मेधायालभन्त । तमालभ्योपावसन् । प्रातर्यष्टास्मह इति । एकं वा एतद्देवानामहः । यथ्संवथ्सरः । तस्मादश्वः पुरस्तांथ्संवथ्सर आलभ्यते । यत्प्रजापतिरालब्धोऽश्वोऽभवत् । तस्मादश्वः । यथ्सद्यो मेधोऽभवत् ॥ ७१ ॥ तस्मादश्वमेधः । वेद्रुकोऽश्वमाशुं भवति । य एवं वेद । [2]यद्वै तत्प्रजापति-

[1]प्रजापतिं वा इत्यादि ॥ पशुं भूतं पशुरूपेणावस्थितं निजपितरं प्रजापतिं देवाः मेधाय यज्ञाय आलभ्योपावसन् प्रातः श्वो यष्टास्मह इति । तस्मात्संवत्सरसमाप्तेः पुरस्तात् अश्व आलभ्यते देवानामेकमहस्संवत्सर इत्युक्तत्वात्तस्मिन्नश्वाहन्यालब्धत्वात् । अश्वभूतः प्रजापतिर्यस्मादालब्धः, तस्मादद्याप्यश्व आलभ्यते । यस्माच्च तदानीं सद्यः समाने एकस्मिन्नेवाहनि अश्वः मेधोऽभवत्, अश्वसंबन्धेन उक्थ्यस्समपादि,* तस्मादश्वमेधोऽभवत् । एवं सद्य एवाश्वमेधसंपत्तेर्वेदिता आशुं शीघ्रगामिनमश्वं वेद्रुको लब्धा भवति महाधनो भवति । विन्दतेश्छान्दस उकञ् ॥

[2]यद्वा इति ॥ यस्मादश्वात्मा प्रजापतिः आलब्धः तस्मात्पशूनां मध्ये अश्वः प्रजापतेरनुरूपतमः अनुकूलतमः, तस्मात्

*संवत्सरस्य द्वादशे मासि नवदिवसादर्वागेव तुरगमानयन्ति । ततस्सप्तदिनेषु दीक्षा, ततो द्वादशोपसदः, तत्रैवाग्नीषोमीयः पशुः, ततोऽग्निष्टोमः, तत उक्थ्य इति त्रिंशद्दिनात्मको द्वादशो मास इति विवेकः. इत्यधिकः पाठः.

रालब्धोऽश्वोऽभवत् । तस्मादश्वः प्रजापतेः पशूनामनुरूपतमः । आऽस्य पुत्रः प्रतिरूपो जायते । य एवं वेद । [3]सर्वाणि भूतानि सम्भृत्यालभते । समेनं देवास्तेजसे ब्रह्मवर्चसाय भरन्ति । योऽश्वमेधेन यजते ॥ ८० ॥ य उचैनमेवं वेद । [4]एतद्वै तद्देवा एतां देवताम् । पशुं भूतं मेधायालभन्त । यज्ञमेव । यज्ञेन यज्ञमयजन्त देवाः । कामप्रं य-

प्रजापतेरश्व आलभ्यते । एवं वेदितुः प्रतिरूप आत्मतुल्यः पुत्र आजायते ॥

[3]सर्वाणीति ॥ अश्वस्य प्रजापत्यात्मकत्वात्, प्रजापतेश्च सर्वभूतात्मकत्वात् सर्वाणि भूतानि संभृत्य एकीकृत्य आलभते अश्वमेधयाजी । तस्मादेनं देवास्तेजसे ब्रह्मवर्चसाय च संभरन्ति तदुभयं सम्यक्कल्पयन्ति योऽश्वमेधेन यजते, यश्चैनमेवंमहिमानं वेद ॥

[4]एतद्वा इत्यादि ॥ यदुक्तं देवाः एतां देवतां प्रजापतिं पशुं भूतं मेधाय आलभन्तेति पूर्वमस्माभिः एतत् वक्ष्यमाणं तदिति मन्तव्यम् । यज्ञमेवेति । यज्ञमेव यज्ञायालभन्तेति तदभिप्राय इत्यर्थः । अस्तु किमनेन साधितेनेत्याह—यज्ञेनेत्यादि । 'यज्ञेन यज्ञमयजन्त देवाः' * इत्युक्तं भवतीत्यर्थः । ऋच एव प्रतीकग्रहणमिति केचित् । यज्ञात्मानं प्रजापतिं यज्ञात्मना प्रजाप-

* सं. ३-५-११.

ज्ञमकुर्वत । तेऽमृतत्वमकामयन्त । तेऽमृतत्वमग- च्छन् । योऽश्वमेधेन यजते । देवानामेवायनेनैति ॥ ८१ ॥ प्राजापत्येनैव यज्ञेन यजते कामप्रेण । अ- पुनर्मारमेव गच्छति । [5]एतस्य वै रूपेण पुरस्ता- त्प्राजापत्यमृषभं तूपरं बहुरूपमालभते । सर्वेभ्यः कामेभ्यः । सर्वस्याप्त्यै । सर्वस्य जित्यै । सर्व-

तिना अयजन्त इति । ते हि देवाः कामप्रं सर्वेषां कामानां प्रापयितारं पूरयितारं यज्ञमकुर्वत । तस्मात् यज्ञेन यज्ञमयजन्तेति । 'प्रा पूरणे' । 'आतोऽनुपसर्गे कः' । कः पुनर्देवानां काम इत्याह—तेऽमृततत्वमित्यादि । तस्मात् अश्वमेधयाजी देवानामयनेन मार्गेण एति गच्छति यत्र न मृत्युः । तस्मात् प्राजापत्येन कामप्रेणानेन यज्ञेन यष्टा अपुनर्मारं पुनर्मरणनिवृत्तिं गच्छति जरामरणरहितो भवति ॥

[5]एतस्येति ॥ एतस्य प्रजापतेः रूपेणोपलक्षितं प्राजापत्यं वृषभं सेक्तारं तूपरं शृङ्गरहितं बहुरूपं नानावर्णं पुरस्तात् अश्वमेधारम्भ एव साङ्ग्रहणीसंज्ञान्योरनन्तरमेव वैशाख्यां पौर्णमास्यामालभते सर्वेभ्यः कामेभ्यः । स च सर्वस्याप्त्यै भवति सर्वस्य च जित्यै । तस्मात् तेन तादृशेन पशुनोपलक्षितेन अश्वमेधेन सर्वमाप्नोतीष्टं, जयति च सर्वं जेतव्यम् । योऽनेन

मेव तेनाप्नोति । सर्वं जयति । योऽश्वमेधेन यजं-
ते । य उ चैनमेवं वेदं ॥८२॥

मेधोऽभवद्यजंत एति वेदं ॥२२॥

[1]यो वा अश्वंस्य मेध्यंस्य लोमंनी वेदं। अश्वं-
स्यैव मेध्यंस्य लोमंल्लोमञ्जुहोति । अहोरात्रे वा
अश्वंस्य मेध्यंस्य लोमंनी। यत्सायम्प्रातर्जुहोतिं।
अश्वंस्यैव मेध्यंस्य लोमंल्लोमञ्जुहोति । एतदंनु-

---

यजते, यश्चैनमेवं ईदृक्प्रभावपशुं क्रतुं वेद, स च सर्वमा-
प्नोति जयति च ॥

इति तृतीये नवमे द्वाविंशोऽनुवाकः.

---

[1]यो वा इत्यादि ॥ अहोरात्रादीनां अश्वावयवरूपणेन अश्वः
स्तूयते । इत्थमिदं ज्ञातव्यमिति स्तुतिफलम् । अश्वस्य मेधार्हस्य
संवत्सरप्रजापत्यात्मनः लोम्नोर्वेदिता तस्य लोम्नि लोम्नि सर्वेषु लो-
मसु होता बह्वीनामाहुतीनां होता भवति, आहुतिभूयस्त्वात् फल-
भूयस्त्वमिति भावः । के तर्हि महानुभावे अश्वस्य लोमनी? इत्याह—
अहोरात्रे इति । संवत्सरप्रजापत्यात्मनोऽश्वस्य लोमस्थानीये
आहोरात्रे, एवं विदित्वा सायं प्रातरग्निहोत्रं जुह्वता अश्वस्य
मेध्यस्य प्रजापतेरेव लोम्नि लोम्नि हुतं भवति । एतदनुकरणीयं
यस्य तदेतदनुक्राति इदमेवानुकुर्वन्तः पुराकल्पे अश्वस्य लोम्नि

कृति ह स्म वै पुरा । अश्वस्य मेध्यस्य लोमं-ल्लोमञ्जुह्वति । [2]यो वा अश्वस्य मेध्यस्य पदे वेद । अश्वस्यैव मेध्यस्य पदेपदे जुहोति । दर्शपूर्णमासौ वा अश्वस्य मेध्यस्य पदे ॥ ८३ ॥ यद्दर्शपूर्णमासौ यजते । अश्वस्यैव मेध्यस्य पदेपदे जुहोति । एतदनुकृति ह स्म वै पुरा । अश्वस्य मेध्यस्य पदेपदे जुह्वति । [3]यो वा अश्वस्य मेध्यस्य विवर्तनं वेद । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति । असौ वा आदित्योऽश्वः । स आहवनीयमागच्छति । तद्विवर्तते । यदग्निहोत्रं जुहोति । अश्वस्यैव मेध्यस्य विवर्तने विवर्तने जुहोति ।

---

लोम्नि जुह्वति स्म अद्यत्वे तु ज्ञानमात्रेणैव तत्फलसिद्धिरिति भावः । 'लट् स्मे' इति लट् । एवमुत्तरत्र द्रष्टव्यम् ॥

[2] संवत्सरात्मनः प्रजापतेः पदस्थानीयौ दर्शपूर्णमासौ अमावास्यापौर्णमास्यौ तयोः दर्शपूर्णमासयोः कर्मणोः कर्ता । गतमन्यत् ॥

[3] संवत्सरात्मा प्रजापतिरादित्य एव । स एवाश्वत्वेन विवर्तते तस्य विवर्तनं आहवनीयप्रवेशः 'अग्निं वावादित्यस्सायं प्रविशति'* इत्येवं विदित्वा अग्निहोत्रं जुह्वता अश्वस्य विवर्तने विवर्तने

---

* ब्रा. २-१-२.

एतदनुकृति ह स्म वै पुरा । अश्वस्य मेध्यस्य विवर्तने विवर्तने जुह्वति ॥ ८४ ॥

पदे अग्निहोत्रं जुहोति त्रीणि च ॥ २३ ॥

प्रजापतिस्तमष्टादशिभिः प्रजापतिरकामयतो-भावस्मै युञ्जन्ति तेजसाऽपं प्राणा अप श्रीरूर्ध्वा प्रजापतिः प्रेणाऽनु प्रथमेन प्रजापतिरकामयत महान्वैश्वदेवो वा अश्वस्य प्रजापतिस्तं यज्ञक्रतु-भिरप श्रीर्ब्राह्मणौ सर्वेषु वारुणो यद्यश्वं तदाहु-रेष वै विभूस्ताप्र्येणादित्याः प्रजापतिं पितरं यो वा अश्वस्य मेध्यस्य लोमनी त्रयोविंशतिः ॥ २३

प्रजापतिरस्मिन्लोक उत्तरतश्श्रियमेव प्रजा-पतिरकामयत महान् यत्प्रातः प्र वा एष एभ्यो लोकेभ्यस्सर्वं ह वै तत्र पर्यस्वद्य उ चैनमेवं वेद चत्वार्यशीतिः ॥ ८४ ॥ हरिः ओम्.

सर्वस्मिन् विवर्तनरूपे हुतं भवति । एवमीदृशप्रजापत्यात्मा अयमश्व इति अश्वस्यैव स्तुतिः ॥

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये
यजुर्वेदभाष्ये अश्वमेधे तृतीयाष्टके
नवमप्रपाठके त्रयोविंशोऽनुवाकः
अश्वमेधस्समाप्तः.

हरिः ओम्॥ [1]सं॒ज्ञानं॑ वि॒ज्ञानं॑ प्र॒ज्ञानं॑ जा॒नद॑भिजा॒नत् । सं॒कल्प॑मानं प्र॒कल्प॑मानमु॒प॒कल्प॑मान॒-

ओम् ॥ [1]एवमश्वमेधान्तानि तित्तिरिप्रोक्तानि काण्डानि व्याख्यातानि । अथ काठकाग्निकाण्डान्यष्टौ—सावित्रनाचिकेतचातुर्होत्रवैश्वसृजारुणकेतुकानि पञ्च चित्यानि, दिवश्येनयोऽपाघाश्चेष्टयः, स्वाध्यायब्राह्मणमष्टममिति । तत्र चित्यानां हव्यवाट् काण्डऋषिः, आरुणकेतुकस्य त्वरुणः, इष्टिकाण्डयोर्विश्वेदेवाः, स्वाध्यायविधेर्ब्रह्मा, तत्र सावित्राग्निमन्त्राः संज्ञानमित्यादयः । तत्रायं प्रयोगः—

उत्तमाङ्गुलिपर्वप्रमाणः पञ्चाशीतिशतं हिरण्येष्टकाश्शर्करा वाऽभ्यक्ताश्चतस्रः स्वयमातृण्णाः अपरिमिता लोकंपृणाश्चोपकल्प्य उत्तरवेदिदेशस्य मध्ये शङ्कुं निहत्य सर्वतः परिमण्डलं रथचक्रमात्रं सावित्रं परिलिख्य लेखाया अभ्यन्तरं नव परिमण्डला लेखा लिखित्वा नवम्यां बाह्यायां लेखायां पञ्चदश पूर्वपक्षस्याहान्युपदधाति । अहरिष्टका इत्यर्थः । संज्ञानादयश्चैता अह्नामाख्याः, ब्राह्मणं च—'एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि'* इति । तत्रैषां भिन्नवाक्यत्वात्साकाङ्क्षत्वाच्चोपधानमन्त्राणामन्ते 'भूरग्नि च'† इत्यनुवाक आम्नातं 'तया देवतया'† इत्येतत्तत्र कृतार्थमप्येषामर्थित्वात्प्रत्येकं संबध्यते । तेनतेन च दिनेनाभेदमुपचर्य इष्टका एवोच्यन्ते । तत्र संज्ञानं नामाद्यमहः पूर्वपक्षस्य, संगतं ज्ञायतेऽमावास्याकार्यमिष्ट्यादि । विज्ञानं द्वितीयं, व्यावृत्तं ज्ञायमानत्वात् । न हि कदाचिच्छुक्लाद्वितीयायामपर-

* ब्रा. ३-१०-१०. † ब्रा. ३-१०-२.

मुपंक्लृप्तं क्लृप्तम् । श्रेयो वसीय आयथ्सम्भूतं

पक्षकार्यं क्रियते । प्रज्ञानं तृतीयं, प्रकर्षेण ज्ञायन्ते शुभानि कर्माण्यस्मिन्निति । जानत् चतुर्थं, जानात्येवात्मानं पूर्वपक्षत्वेन न तु शुभानि कर्माणि प्रवर्धयति पक्षाच्छिद्रत्वात्, रिक्तात्मत्वाच्च । अभिजानत् पञ्चमं, आभिमुख्येन शुभानि कर्माणि जानातीति । संकल्पमानं षष्ठं, पूर्वपक्षत्वेनात्मनि कर्माणि स्वयं संकल्पन्ते न तु कुर्वन्ति छिद्रत्वात् । प्रकल्पमानं सप्तमं, कर्मसु प्रकर्षेण कल्पते हेतुत्वं भजते । उपकल्पमानं अष्टमं, ईषत् उपकल्पते कर्मसु अष्टकादिप्रवृत्तेः । न तु पुष्कलं कल्पते छिद्रत्वात् । उपक्लृप्तं नवमं, अष्टम्यनुसारित्वात्तेनात्मसमीपे क्लृप्तं न तु सर्वकर्मयोग्यं छिद्रत्वाद्रिक्तत्वाच्च । क्लृप्तं दशमं, सर्वात्मना शुभेष्वनुज्ञातम् । श्रेय एकादशं, प्रशस्ततरं कर्मसु दशमादपि चन्द्रवृद्ध्या । वसीयो द्वादशं, वसुमत्तरं गमनादौ धनदत्वादेकादशादतिप्रशस्तमित्युक्तं भवति । आयत् त्रयोदशं, आयतते कर्मसु कारणत्वेन एति वा । संभूतं चतुर्दशं, संगतं भवति कल्याणमकल्याणं च तस्मिन्निति सम्भूतं, यद्वा—संगतवति पौर्णमास्यपर्वत्वव्यवहारात् यथा पूर्वस्मिन् पर्वणीति । भूतं पञ्चदशं भवति, न पराभवति चन्द्रोऽस्मिन्निति सर्वसाधनं भूतम् ॥

इति ज्ञानयज्ञाख्ये भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये प्रथमे काठके प्रथमोऽनुवाकः

भूतम् । [2]चित्रः केतुः प्रभानाभान्थ्संभान् । ज्योतिष्मा॑ꣳस्तेजस्वानातप॑ꣳस्तपन्नभितपन् । रोचनो रोचमानश्शोभनश्शोभमानः कल्याणः । [3]दर्शा

---

[2]अथ तेषामन्तराळेष्वेतेषामह्नां पञ्चदशमुहूर्तानुपदधाति—चित्र इति॥ एकैकस्याह्नः पञ्चदशमुहूर्ता द्विघटिकाः । चित्रः प्रथमः, चायनीयः जपहोमादिकालत्वात् । केतुः द्वितीयः, कर्तव्यानां केतनकालत्वात्, ख्यापकत्वाच्च । प्रभान् तृतीयः, उदयरागव्यपगमेन प्रकृष्टं भातीति । आभान् चतुर्थः, ईषदुष्णत्वात्सर्वतो भानाद्वा । संभान् पञ्चमः, संहतदीप्तिमत्त्वात् । ज्योतिष्मान् षष्ठः, महाद्योतनः । तेजस्वान् सप्तमः, महातैक्ष्ण्यः । आतपन् अष्टमः, समन्तात्तापयतीति । तपन् नवमः, अविशेषेण दुःखयतीति । अभितपन् दशमः, आभिमुख्येन पूर्वतापस्योपरि वा तापं जनयतीति । रोचनः एकादशः, रोचयति लोकं रोचमानलोकत्वात् । 'अनुदात्तेतश्च हलादेः' इति युच् । रोचमानो द्वादशः, निवृत्ततापत्वेन लोकस्यानुकूलीभवन् । शोभनः त्रयोदशः, शोभयति लोकं सुहितत्वात् सर्वस्य । शोभमानः चतुर्दशः, आतपशान्त्या शोभमानः । कल्याणः पञ्चदशः, गन्धकुसुमादिभोगकालत्वात् ॥

इति प्रथमे काठके द्वितीयोऽनुवाकः.

---

[3]अथाभ्यन्तरायां लेखायां पञ्चदश पूर्वपक्षस्य रात्रीरुपदधाति—दर्शेति ॥ प्रथमा दर्शा । चन्द्रनिमित्ता व्यपदेशाः । अमावा-

दृष्टा द॑र्श॒ता वि॒श्वरू॑पा सु॒द॒र्श॒ना । आ॒प्याय॑मा॒ना प्याय॑मा॒ना प्याया॑ सू॒नृते॑रा । आ॒पूर्य॑मा॒णा पू-

स्यायां चन्द्रो दर्शोऽदृष्ट एव भवति, न तु केनचिददृश्यत्वात् । प्रथमायां रात्र्यामिति [मपि] सा दर्शेत्युच्यते, अदृश्यचन्द्रत्वात् । दृष्टा द्वितीया रात्रिः, दृष्टचन्द्रत्वात् । दर्शता तृतीया, दीर्घकालदर्शनीयचन्द्रा । द्वितीयायां हि दृष्टोऽपि उत्तरक्षणेऽस्तमेति । औणादिकोऽतच्प्रत्ययः । विश्वरूपा चतुर्थी, विश्वरूपाभिव्यक्तिहेतुत्वात् । सुदर्शना पञ्चमी, स्पष्टाभिव्यक्तिहेतुत्वात् । आप्यायमानेति षष्ठीसप्तम्योराख्या, प्यायमाना सप्तमीति केचित् । समन्ताद्वर्धमानमण्डला षष्ठी, समन्ताद्वर्धमानतेजास्सप्तमी । प्याया अष्टमी, सस्यादिसमृद्धेः । सूनृता नवमी, प्रत्यासन्नास्थानेन विश्वं प्रीणयतीति । इरा दशमी, बहुप्रकाशत्वेन स्तुत्या । आपूर्यमाणेत्येकादशीद्वादश्योराख्या, पूर्यमाणा वा द्वादशी । प्रकाशातिशयेन मण्डलमतीत्यापूर्यमाणेव भवत्येकादशी । ऊनेऽपि मण्डलैकदेशे पूर्यमाणमण्डलेव भवति प्रकाशमहिम्ना द्वादशी । पूरयन्ती त्रयोदशी, विश्वमपि जगत् प्रकाशेन पूरयतीति । पूर्णा चतुर्दशी, पूर्णचन्द्रया पञ्चदश्या तुल्यत्वान्न्यूनत्वस्य चानुपलम्भात् । पौर्णमासी पञ्चदशी, पूर्णो माश्चन्द्रः पूर्णमास्तत्संबन्धिनी पौर्णमासी, सर्वात्मना पूर्णचन्द्रा ॥

इति प्रथमे काठके तृतीयोऽनुवाकः.

यँमाणा पूरयन्ती पूर्णा पौर्णमासी । [4]दाता प्रदाताऽऽनन्दो मोदः प्रमोदः ॥ १ ॥ आवेशयन्निवेशयन्थ्संवेशनस्सꣳशान्तश्शान्तः । आभवन्प्रभवन्थ्सं-

[4]तासामन्तराळेष्वेतासां रात्रीणां पञ्चदश मुहूर्तान् उपदधाति—दातेति ॥ प्रथमो दाता, रात्रिवृत्तान्तानामीषद्दाता आरम्भयिता । प्रदाता द्वितीयः, तेषां प्रकर्षेणारम्भयिता प्रोत्साहयिता । आनन्दः तृतीयः, कुसुमालेपनाद्यनुभवकालत्वात् । मोदश्चतुर्थः, मित्रादिभिस्सह हर्षणात् । प्रमोदः पञ्चमः, स्त्रीभिस्सह प्रकर्षेण हर्षणात् । आवेशयन् षष्ठः, शयनागारादावौत्सुक्यं जनयतीति । निवेशयन् सप्तमः, स्त्रीपुंसौ सन्निधापयतीति । संवेशनोऽष्टमः, शयनेषु सर्वाणि भूतानि शाययतीति । संशान्तो नवमः, संगतं मनसा शमयतीति । मनसीन्द्रियाणि निवेश्यन्त इति स्वापकारी । शान्तो दशमः, मनसो व्युपरतौ सुषुप्तेर्जनयिता, सर्वात्मना शान्तत्वात् । आभवन् एकादशः, सर्वतः करणानां तृप्तिमनुभवतीति । प्रभवन् द्वादशः, विधेयीकृतत्वात्करणानां प्रभुर्भवतीति । संभवन् त्रयोदशः, संगतं भवनं पुनरपीन्द्रियसमागमनं तत्करोति प्रबुध्यत इति प्रबोधो मुख उच्यते । संभूतश्चतुर्दशः, यथाऽयमिन्द्रियैस्संयुक्तः प्रबुद्धः । भूतः पञ्चदशः, आत्मलाभेन निष्पन्नो भूतः स्वस्थः ॥

इति प्रथमे काठके चतुर्थोऽनुवाकः.

भवन्थ्संभूतो भूतः । [5]प्रस्तुतं विष्टुतꣳ सꣳस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजस्समिद्धम् । अरुणं भानुमन्मरीचिमदभितपत्तपस्वत् ।

[5]अथान्तरस्यां पञ्चदश अपरपक्षस्य अहान्युपदधाति—प्रस्तुतमिति ॥ प्रथमं प्रस्तुतं साम्नः कृष्णत्वात् तद्भक्तित्वेन कृष्णपक्षांशा रूप्यन्ते । प्रस्तावात्मकं प्रथममहः । विष्टुतं द्वितीयं, विष्टुतिसमानत्वात् । संस्तुतं तृतीयं, संस्तावभक्तिसाम्यात् । कल्याणं चतुर्थं, उद्गानतुल्यत्वात । विश्वरूपं पञ्चमं, निधनसाम्यात् । शुक्रं षष्ठं, विजृम्भितत्वेन रक्षःप्रभृतीनां कारणं नन्दात्वाच्च । अमृतं सप्तमं, तेषाममृतत्वहेतुत्वाद्भद्रात्वाच्च । तेजस्वि अष्टमं, तेषां तेजोवृद्धिहेतुत्वाज्जयात्वाच्च । तेजो नवमं, तेषामुत्तेजनहेतुत्वात्, अग्निविद्या सर्वं नाशयति क्रियमाणं कर्मेति, अत एव रिक्तात्वमिति । समिद्धं दशमं, संपूर्णत्वाद्धिंसकैर्जन्तुभिः । अत एव पूर्णा । अरुणमेकादशं तामसानां जन्तूनामरुणकालवदाह्लादकम् । भानुमत् द्वादशं, भानुमण्डलोदयमात्रवत् तादृक्कालस्थानीयं तेषाम् । मरीचिमत् त्रयोदशं, विततभानुरश्मिकालस्थानीयं तेषाम् । अभितपत् चतुर्दशं, अभितस्तपत्तपनकेन कालेन समम् । तपस्वत्पञ्चदशं, महातापभानुक्रमध्याह्नस्थानीयं, तेषां प्रतिपक्षभूयस्तया सर्वे तत्र तपस्विनो भवन्तीति वा ॥

इति प्रथमे काठके पञ्चमोऽनुवाकः.

[6]स॒वि॒ता प्र॑सवि॒ता दी॒प्तो दी॒पय॒न्दीप्य॑मानः । ज्व॒लञ्ज्व॑लि॒ता तप॑न्वि॒तप॑न्थ्सं॒तपन्॑ । रो॒च॒नो रोच॑मा॒नश्शु॒म्भूश्शु॒म्भ॑मानो वा॒मः । [7]सु॒ता सु॒न्व॒ती प्रसु॒-

---

[6]अथ तेषामन्तरालेष्वेतेषामह्नां पञ्चदश मुहूर्तानुपदधाति—सवितेति ॥ सविता प्रथमः, कर्मणामुत्पादकः । प्रसविता द्वितीयः, अनुज्ञाता कर्मणाम् । दीप्तस्तृतीयः, चन्द्रदौर्बल्यात् । दीपयंश्चतुर्थः, जगदपि दीपयति । दीप्यमानः पञ्चमः, प्रकर्षेण दाहकः । पुनर्वचनाद्विशेषावगतिः । ज्वलन् षष्ठः, ज्वलदग्निकल्पः । ज्वलिता सप्तमः, जगतोऽपि ज्वलयिता । तपन्नष्टमः, समन्तात्तापयतीति । वितपन्नवमः, दिनमध्याद्वियुतत्वाद्विश्लिष्टं तापयति । संतपन् दशमः, संगतं सह्यं तपतीति । रोचन एकादशः, रोचनशीलः नातिपीडाकरः । रोचमानो द्वादशः, सर्वस्मै रोचमानः अनुकूलः अपेक्षिततापः । शुम्भूस्त्रयोदशः, शुम्भनशीलः निवृत्ततापत्वान्मनोहरः । शुम्भमानश्चतुर्दशः, प्रजा अपि शोभयन् । वामः पञ्चदश', वननीयस्वभावः साह्लादलोकत्वात् ॥

इति प्रथमे काठके षष्ठोऽनुवाकः.

---

[7]अथान्तरस्यां पञ्चदशापरपक्षस्य रात्रीरुपदधाति—सुतेति ॥ सुता प्रथमा, सर्वैरनुज्ञाता सद्य एव चन्द्रोदयेन तिमिराभावात्॥ सुन्वती द्वितीया, सोमं सुन्वदहरिव रक्षसां प्रीतिहेतुः, स्वल्पतिमिरतया वा कर्मणामनुज्ञात्री । प्रसुता तृतीया, सवनारम्भ-

ता सूयमानाऽभिषूयमाणा । पीती प्रपा संपा तृप्तिस्तर्पयन्ती ॥ २ ॥ कान्ता काम्या कामजाताऽऽयुष्मती कामदुघा । [8]अभिशास्ताऽनुमन्ताऽऽन-

क्षणमिव तेषां प्रीतिहेतुः । सूयमाना चतुर्थी, क्रियमाणसवनदिनभागवत्तृप्तिकरी तेषाम् । अभिषूयमाणा पञ्चमी, अभिषूयमाणसोमकदिवसांशस्थानीया तेषाम् । पीती षष्ठी, शार्ङ्गरवादिलक्षणो ङीप् । पीतसोमकदिवसैकदेशसदृशी तेषाम् । प्रपा सप्तमी, प्रकृष्टसोमपानाधारक्रतुकल्पा तेषाम् । संपा अष्टमी, संघातपीतसोमक्रतुरूपा तेषाम् । तृप्तिर्नवमी, अन्धकारातिशयेन तृप्तिहेतुस्तेषाम् । तर्पयन्ती दशमी, चन्द्रमसस्त्रिभागावशेषत्वादत्यर्थं तृप्तिं जनयन्ती । कान्ता एकादशी, अल्पप्रकाशत्वेन तेषामिष्टा । काम्या द्वादशी, इयमेव रात्रिस्सर्वकाममस्त्विति तैः काम्यमाना । कामजाता त्रयोदशी, आविर्भूतसर्वकामा । 'जातिकालसुखादिभ्यः' इति परवचनम् । आयुष्मती चतुर्दशी, अन्धकारातिशयेन दीर्घेव लक्ष्यते । रक्षसामायुस्स्थितिहेतुर्वा । कामदुघा पञ्चदशी, यथाऽभिलाषं काम्यानां दोग्ध्री तेषाम् ॥

इति प्रथमे काठके सप्तमोऽनुवाकः.

---

[8]अथ तासामन्तरालेष्वेतासां रात्रीणां पञ्चदशमुहूर्तानुपदधाति—अभिशास्तेति ॥ अभिशास्ता प्रथमः, आभिमुख्येन शासिता लोकस्य, स्वे स्वे पदे स्थापयति । 'प्रसितस्कभित' इत्यत इडभावो निपात्यते । अनुमन्ता द्वितीयः, स्वे स्वेऽभिलषिते

न्दो मोदः प्रमोदः। आसादयन्निषादयन्थ्सꣳसादं-
नस्सꣳसंन्नस्सन्नः। आभूर्विभूः प्रभूश्शम्भूर्भुवः।
9पवित्रं पवयिष्यन्पूतो मेध्यः। यशो यशस्वाना-

प्रवर्तयति। आनन्दस्तृतीयः, आनन्दादयस्त्रयो व्याख्याताः। आसादयन्नादयः पञ्च आवेशयन्नादिभिर्व्याख्याताः। चन्द्रक्षयेणोपक्षीणशक्तिजनकत्वात् सीदतिग्रहणम्। आभूप्रभृतयोऽप्याभवन्नादिभिस्समानार्थाः। सर्वत्र भवतेः क्विप्। पञ्चमे 'घञर्थे कविधानम्' इति कः, अव्ययं वा॥

इति प्रथमे काठके अष्टमोऽनुवाकः.

9अथान्तरस्यां द्वादश पूर्वपक्षानुपदधाति—पवित्रमिति॥ पवित्रं प्रथमः, स्वयमेव शोधकत्वात्कर्मकाल इति। पवयिष्यन् द्वितीयः, करिष्यमाणैः कर्मभिर्दोषाणां क्षाळयितृत्वात्। पूतस्तृतीयः, निजसंबन्धेन पूतलोकत्वात्। मेध्यश्चतुर्थः, मेधार्हः। यशः पञ्चमः, यशसो हेतुत्वात्। यशस्वान् षष्ठः, यशस्वित्वात्तत्र लोकस्य। आयुस्सप्तमः, आयुषो हेतुत्वात्। अमृतोऽष्टमः, दीर्घजीवनहेतुत्वात्। जीवो नवमः, जीवस्थानीयत्वात्। जीविष्यन् दशमः, कर्मकारिणां जीवयितृत्वात्। स्वर्ग एकादशः, प्रीतिहेतुत्वात्। लोको द्वादशः, लोकप्रदत्वात्॥

इति प्रथमे काठके नवमोऽनुवाकः.

युरमृतः । जीवो जीविष्यन्थ्स्वर्गो लोकः । [10]सहं-स्वान्थ्सहीयानोजंस्वान्थ्सहमानः । जयन्नभिज-यन्थ्सुद्रविणो द्रविणोदाः । आर्द्रपवित्रो हरिकेशो मोदः प्रमोदः ॥ ३ ॥ [11]अरुणोऽरुणरजाः पुण्डरीको

---

[10]अथान्तरस्यां द्वादशापरपक्षानुपदधाति—सहस्वानिति ॥ सहस्वान् प्रथमः, बलवत्त्वात्सर्वस्य तत्र । सहीयान् द्वितीयः, सोढृतरः अभिभवितृतरस्सर्वो भवति । ओजस्वान् तृतीयः, देहश्रीस्तत्र भवतीति । सहमानश्चतुर्थः, अभिभवनशीलः । जयन् पञ्चमः, तमसा लोकमभिभवति । अभिजयन् षष्ठः, अभितो जेता लोकस्य मेघाभिभवात् । सुद्रविणस्सप्तमः, शोभमानानि द्रव्याणि तत्र भवन्तीति । द्रविणोदा अष्टमः, द्रविणपुष्टिहेतुत्वात् । सकारोपजनश्छान्दसः । आर्द्रपवित्रो नवमः, यागाद्यभावेन दर्भाणामनाहरणात् । हरिकेशो दशमः, यागाद्यभावेनैव हरिकेशा मनुष्या वृक्षाश्च भवन्ति । मोद एकादशः, धान्यसमृद्ध्या । प्रमोदो द्वादशः, पुष्टप्रायत्वात्तत्र सर्वस्य ॥

इति प्रथमे काठके दशमोऽनुवाकः.

---

[11]अथान्तरस्यां त्रयोदश मासनामान्युपदधाति—अरुण इति ॥ अरुणः प्रथमः, अरुणोदयकालवन्मन्दप्रकाशः फाल्गुनः । अरुणरजा द्वितीयः चैत्रः, (बलजासुद्रजाः)? । पुण्डरीकस्तृतीयः वैशाखः, अरविन्दवान् । विश्वजिच्चतुर्थः, ज्येष्ठः महत्त्वादह्नाम् ।

विश्वजिदभिजित् । आर्द्रः पिन्वमानोऽन्नवान्रस- वानिरावान् । सर्वौषधस्संम्भरो महस्वान् । [2]एजत्का जोवत्काः । क्षुल्लकाश्शिपिविष्टकाः । सरि-

अभिजित्पञ्चमः आषाढः, अभिजिन्नक्षत्रयोगात्पौर्णमास्याः । आर्द्रष्षष्ठः श्रावणः, आर्द्रत्वात्सर्वस्या भुवः । पिन्वमानस्सप्तमः प्रोष्ठपदः, धान्यसमृद्ध्या जगतः प्रीणनात् । अन्नवानष्टमः आश्वयुजः, शारदधान्यनिर्वृत्त्या । रसवान् नवमः कार्तिकः, बहुक्षीरत्वात् इक्ष्वादिसंपत्त्या च । इरावान् दशमः मार्गशीर्षः, धान्यविशेषोत्पत्त्या अन्नवान् । सर्वौषध एकादशस्तैषः, सर्वौषधसंपत्त्या । संभरो द्वादशो माघः, सर्वधान्यसंभरणात् । महस्वांस्त्रयोदशः, अधिकमासत्वेन महत्त्वकारित्वात् ॥

इति प्रथमे काठके एकादशोऽनुवाकः.

---

[12]अथ सिकता उपदधाति—एजत्का इति ॥ एजत्काः एजत्कालयुक्त्वेन चलनशीलाः । 'एजृ कम्पने' अज्ञाते प्रागिवीयः कः । यद्वा—'एजृ दीप्तौ' व्यत्ययेन परस्मैपदम् । जोवत्काः जोवत्कालयुक्त्वेन जवनशीलाः । जु इति सौत्रो धातुः । जवत्का इति वक्तव्ये छान्दसो वर्णविकारः । क्षुल्लकाः क्षुद्राः । शिपिविष्टकाः रश्मिभिर्विष्टाः । सरिस्सराः अत्यन्तं सरणशीलाः । सर्तेर्यङ्लुकि 'रुग्रिकौ च' इति रिगागमे पचाद्यचि सरिसरा इति वक्तव्ये रेफोपजनश्छान्दसः । सुशेरवः सुष्ठु शेरते

त्वरास्सुशेरवः । अजिरासो गमिष्णवः । [13]इदानीं तदानीमेतर्हि क्षिप्रमजिरम् । आशुर्निमेषः फणो द्रवन्नतिद्रवन् । त्वरङ्स्त्वरमाण आशुराशीयाञ्ज-

आस्विति । शेतेरौणादिको रुप्रत्ययः । अजिरासः अजिनीयाः क्षेपणीयाः । औणादिक इरच्प्रत्ययः । जीर्यतेर्वा घञर्थे कप्रत्ययः । रणं जिरः तद्रहिता अजिराः । 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । गमिष्णवः गत्वरस्वभावाः लघुत्वात् । अगमिष्णवः अगत्वरा इति केचित्, तदयुक्तं अव्ययपूर्वपदप्रकृतिस्वरत्वप्रसङ्गात् ॥

इति प्रथमे काठके द्वादशोऽनुवाकः.

[13]अथान्तरस्यां पञ्चदश मुहूर्तमुहूर्तानुपदधाति—इदानीमिति ॥ उक्तानां मुहूर्तानां अवयवा मुहूर्तमुहूर्ताः । इदानीमित्येव यः कालो व्यपदिश्यते स कालविशेषो गृह्यते । इदानीमिति सन्निहितपुरोवर्तिग्रहणकालः । तदानीमित्यसन्निहितबुद्धिस्थग्रहणकालः । एतर्हीति सन्निहितानद्यतनग्रहणकालः । इदम एवानद्यतने र्हिलि 'एतेतौ रथोः' इत्येतादेशः । क्षिप्रं क्षेप्तुं शक्यं स्वल्पत्वात् । अजिरं ईषत्प्राप्तं अजेर्गतिकर्मण औणादिक इरच् । आशुः सुष्ठु व्यापनीयः । निमेषः निमेषक्रियापरिच्छिन्नः । फणः निमेषादल्पतरोऽक्षिविकासपरिच्छिन्नः । ................आशुः व्यापकः व्यापारक्रियावधिकः । आशीयान् ततोऽप्याशुः अल्पदेश्यकाललक्षणः । जवः क्रियावयवनैरन्तर्यम् ॥

इति प्रथमे काठके त्रयोदशोऽनुवाकः.

वः । [14]अग्निष्टोम उक्थ्योऽतिरात्रो द्विरात्रस्त्रिरात्रश्चतूरात्रः । [15]अग्निरृतुस्सूर्य ऋतुश्चन्द्रमा ऋतुः । [16]प्रजापतिस्संवथ्सरो महान्कः ॥ ४ ॥

प्रमोदस्तर्पयन्ती प्रमोदो जवस्त्रीणि च ॥१॥

[1]भूरग्निं च पृथिवीं च मां च । त्रींश्च लो-

[14]अथान्तरस्यां षड्यज्ञक्रतूनुपदधाति—अग्निष्टोम इति ॥ अहर्व्यपदेशादेषामुपधानम् । त्रयोऽत्रैकाहाः त्रयोऽहीनाः । अग्निष्टोमादिरूपेण द्विरात्रादिरूपेणेष्टकास्स्तूयन्ते ॥

इति प्रथमे काठके चतुर्दशोऽनुवाकः.

[15]अग्न्यादित्रयरूपेण ऋतुत्रयरूपेणेष्टकास्स्तूयन्ते । अग्न्यादय एवर्तवः तापवत्तया वृष्टिमत्तया हिमवत्तया च । तस्मात्तादृशानृतूनुपदधातीत्युक्तं भवति ॥

इति प्रथमे काठके पञ्चदशोऽनुवाकः.

[16]अथ नाम्न्यां चत्वारि संवत्सरनामान्युपदधाति—प्रजापतिरिति ॥ संवत्सरात्मनः प्रजापतेरेतानि नामानि । प्रजानां पाता कालः । संवत्सरः संभूय जीवन्ति प्रजा अस्मिन्निति संवत्सरः । महान् महनीयः महापरिमाणो वा । कः अविभक्तात्मा ॥

इति प्रथमे काठके षोडशोऽनुवाकः.

[1]चतस्रस्स्वयमातृण्णा दिक्षूपदधाति—भूरिति ॥ भूर्व्याहृतिः, अग्निर्देवता, पृथिवी लोकः, अहमुपधाता, त्रिलोकवासिनो जनाः,

कान्थ्संवथ्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । भुवो वायुं चान्तरिक्षं च मां च । त्रीꣳश्च लोकान्थ्संवथ्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । स्वरादित्यं च दिवं च मां च । त्रीꣳश्च लोकान्थ्संवथ्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । भूर्भुवस्स्वश्चन्द्रमसं च दिशश्च मां च । त्रीꣳश्च लोकान्थ्संवथ्सरं च । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ५ ॥

संवथ्सरं च षट्च ॥ २ ॥

त्वमेव त्वां वेत्थ योऽसि सोऽसि । त्वमेव त्वामं-

---

संवत्सरस्सर्वानुग्राही कालः, सर्वमिदं त्वदुपधानलब्धात्मकं, तस्माद्भूराद्यात्मिकां त्वां प्रजापतिस्सादयतु, त्वं च तया देवतया सह अङ्गिरसामिव स्थिरा सीद । एवं सर्वासु दिक्षु योज्यम् ॥

इति प्रथमे काठके सप्तदशोऽनुवाकः.

---

[1]अग्निमुपतिष्ठते—त्वमेवेति ॥ प्रथमे द्विपदे त्रिष्टुभौ, विराजौ वा । हे अग्ने! त्वमेव त्वां याथात्म्येन वेत्थ जानासि

चैषीः । चितश्चासि संचितश्चास्यग्ने । एतावाꣳश्चासि भूयाꣳश्चास्यग्ने । [2]यत्ते अग्ने न्यूनं यदु तेऽतिरिक्तम् । आदित्यास्तदङ्गिरसश्चिन्वन्तु । विश्वे ते देवाश्चितिमापूरयन्तु । चितश्चासि संचितश्चास्यग्ने । एतावाꣳश्चासि भूयाꣳश्चास्यग्ने । [3]मा ते अग्नेऽच-

वयं तु न जानीमः । योऽसि यादृशोऽसि स एवासि तादृश एवासि, ईदृशोऽसीति को वेदितुमर्हति । किंच त्वमेव त्वामचैषीः, चिनोषि चेतुमर्हसि तस्मात्त्वयैव चितश्चासि शतरुद्रीयहोमान्तः संचितः एतावांश्चासि यावदेव जानीमः, अस्माभिरेतावतो विदितत्वात् । परमार्थतस्तु अतोऽपि भूयांश्चासि अविदितेन रूपेण बहुतरोऽसि ॥

[2]यत्ते अग्न इति महाबृहती ॥ हे अग्ने! यत्तव न्यूनं मात्रादिना विकलं, यच्च तव अतिरिक्तं मात्राभिरधिकं कृतं प्रमादात् आदित्याश्चाङ्गिरसश्च तच्चिन्वन्तु समं कुर्वन्तु । विश्वे देवास्तव चितिमापूरयन्तु शास्त्रमर्यादाऽनतिलङ्घनेन समीचीनां कुर्वन्तु । इदानीमादित्यादयोऽपि तव याथातथ्यवेदने के नामेत्याह—चितश्चासीति । व्याख्यातम् ॥

[3]मा त इति यजुः ॥ हे अग्ने! तव अचयेन अशक्तेन चयनेन अचयेनन वा 'अच्कावशक्तौ' इत्युत्तरपदान्तोदात्तत्वम् । आयुरात्मीयं माऽऽवृक्षि मा नीनशम् । 'वृजि वर्जने' । मा चातिचयनेन अतिरिक्तेन चयनेन आयुरावृक्षि त्वत्प्रसादात् ॥

येन॒ माऽतिच॒येनायु॒रावृ॑क्षि । 'सर्वे॑षा॒ं ज्योति॑षा॒ं ज्योति॒र्यद॒दावु॒देति॑ । तप॑सो ज॒ातमनि॑भृष्ट॒मोजः॑ । तत्ते॒ ज्योति॑रिष्टके । तेन॑ मे तप । तेन॑ मे ज्वल । तेन॑ मे दीदिहि । याव॑द्दे॒वाः । याव॒दसाति॒ सूर्यः॑ । याव॑दु॒ताप॒ ब्रह्म ॥ ६ ॥

आवृ॑क्षि॒ नव॑ च ॥ ३ ॥

'सर्वेषामत्यष्टी त्रिपदा (षट्पदा) ॥ सर्वेषामपि ज्योतिषां एकं ज्योतिः द्योतकं यत्परं महः तदेवासावादित्यो भूत्वा उदेति तपसो जातं यत्र तपःप्रकर्षस्तत्राविर्भूतं अनिभृष्टं केनचिदप्यनुपहिंसितं ओजः बलं सर्वस्य जगतः । हे इष्टके ! ज्योतिः तदपि ज्योतिः तवैव ज्योतिः त्वदुपधानेन तत्तथोदेति। यद्वा—तत्तुल्यं त्वज्ज्योतिः तस्मात् तेन ज्योतिषा मदर्थं तप तपस्विनी भव, यथाऽहमपि तपस्वी स्याम् । तेनैव ज्योतिषा मदर्थं ज्वल उज्ज्वला भव, यथाऽहमप्युज्ज्वलस्संपद्येय । तथा तेनैव ज्योतिषा दीदिहि मदर्थं दीप्यस्व यथाऽहमपि दीप्तिमान् स्याम् । कियन्तं कालमिति चेत्—यावद्देवाः 'असाति' इति वक्ष्यमाणत्वात् सन्तीति गम्यते । यावच्च सूर्योसाति अस्ति। लेटि शपो लुकि लेट आडागमः । यावद्वाऽपि ब्रह्म आत्म-ज्योतिरस्ति तावन्मह्यं तप ज्वल दीदिहि चेति ॥

इति प्रथमे काठके अष्टादशोऽनुवाकः.

[1]संवथ्सरोऽसि परिवथ्सरोऽसि । इदावथ्सरोऽसी-दुवथ्सरोऽसि । इद्वथ्सरोऽसि वथ्सरोऽसि । तस्य ते वसन्तश्शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पूर्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् ॥ ७ ॥ अहोरात्राणीष्टकाः । [2]ऋषभोऽसि स्वर्गो लोकः । यस्यां

---

[1]संहारविहाराभ्यां यजमान उपतिष्ठते—संवत्सरोसीति ॥ तत्र बार्हस्पत्यं षष्टिवर्षं प्रभवादिसंज्ञं महायुगम् । तत्र द्वादशाब्दाः पञ्चकृत्व आवर्तन्ते आश्वयुजाद्याः । तत्रैतैः पञ्चकृत्व आवर्तमानैः द्वादशाब्दप्रमाणानि पञ्चावान्तरयुगानि भवन्ति । तत्र प्रथमे युगे योऽब्दः कार्तिकादिसंज्ञः स संवत्सरो नाम । द्वितीयः परिवत्सरः, तृतीय इदावत्सरः, चतुर्थ इदुवत्सरः, पञ्चमं इद्वत्सरः । वत्सरस्सर्वेष्वपीति । अन्य आहुः—षड्भिष्षड्भिरब्दैरवान्तरयुगानि दश भवन्ति । तत्र प्रथमादयष्षडब्दाः संवत्सरादिसंज्ञा इति । संवत्सरादयस्त्वमेवासि तव चयनेन तथा कल्पन्त इति अग्नेः स्तुतिः । तस्य ते तादृशस्य तव संवत्सराद्यात्मनो वसन्तादिस्थानीयानि शिरःप्रभृतीनि तथैव विधेयानीति ॥

[2]यस्मादेवं तस्मात्—ऋषभोऽसीत्यादि ॥ इयं गायत्री । ऋषभः वर्षिता कामानामसि । स्वर्गलोकस्थानीयश्चासि तद्धेतुर्वा त्वमसि । त्वं यस्यां दिशि महीयसे पूज्यसे ततो दिशः

दिशि महीयसे। ततो नो मह आवह। [3]वायुर्भूत्वा सर्वा दिश आवाहि। सर्वा दिशोऽनु विवाहि। सर्वा दिशोऽनु संवाहि। चित्या चितिमापृण। अचित्या चितिमापृण। [4]चिदसि समुद्रयोनिः॥८॥ इन्दुर्दक्षश्श्येन ऋतावा। हिरण्यपक्षश्शकुनो भुरण्युः। महान्थ्सधस्थे ध्रुव आनिषत्तः। [5]नमस्ते

आदायास्माकं महः तेजः आवह आभिमुख्येन प्रापय तस्यां दिशि वसतां यादृशं तेजस्तादृशं तेजो ममास्त्विति यावत्॥

[3]किंच—वायुर्भूत्वेति पञ्चपदा त्रिष्टुप्॥ हे अग्ने! वायुर्भूत्वा सर्वा अपि दिशः आवाहि गन्धग्रहणाद्युपकारकारी आभिमुख्येन वाहि प्रपद्यस्व। तथा सर्वा दिशोऽनु विवाहि अनन्तरं विविधस्वभावः प्रवर्तय। तथा च कृत्वा अनन्तरं सर्वा दिशस्संवाहि सुहितत्वेनैकीकृत्य वाहि समीरय। तथा वर्तमानस्त्वं अस्मिन् कर्मणि चित्या इष्टकानां चयनेन या चितिः क्रियते तामापृण आपूरय अविकलां कुरु। तथा अचित्या अचितिपूरणेन च चितिमापृण चितिस्थेमसमर्थं पुरीषपूर्णं कुरु॥

[4]चिदसीति पङ्क्तिश्चतुष्पदा॥ व्याख्यातेयं 'अग्निं युनज्मि'* इत्यत्र॥

[5]नमस्त इति यजुस्तत्रैव व्याख्यातम्*॥ एतीत्यादीनि यजूंषि। आकारादय उपसर्गा यच्छतिक्रियां विशिंषन्ति। इतिशब्दोऽ-

* सं. ४-७-१३.

अस्तु मा मा हिꣳसीः । एति प्रेति वीति समित्युदिति । दिवं मे यच्छ । अन्तरिक्षं मे यच्छ । पृथिवीं मे यच्छ । पृथिवीं मे यच्छ । अन्तरिक्षं मे यच्छ । दिवं मे यच्छ । [6]अह्ना प्रसारय । रा-

र्थावच्छेदे प्रकारे वा, इत्थमित्थं यच्छेति । 'दाण् दाने' पाघ्रादिना यच्छादेशः । दिवं मे आयच्छ आभिमुख्येन देहि मदभिमुखमानय । अथ दिवं मे प्रयच्छ प्रभूतानुभवां देहि । अथ दिवं मे वियच्छ विविधभोगां देहि । तथा दिवं मे संयच्छ मया नित्यसंगतां देहि । तथा दिवं मे उद्यच्छ सर्वेभ्योऽधिकभोगां देहि । केचिदाहुः—यमेरेतद्ग्रहणमिति । तत्र आयतत्वं दीर्घकालभोगः, प्रयतत्वं शुद्धत्वं, वियतत्वं विविधान्वयत्वं, संयतत्वं नियतत्वं, उद्यतत्वमनायाससिद्धिः । एवमन्तरिक्षे पृथिव्यां च योज्यम् । प्रथमं द्युलोकादि पृथिव्यन्तं क्रमेण लोकवशीकारः प्रार्थितः, पुनरपि पृथिव्यादिद्युलोकपर्यन्तं लोकैश्वर्याधिकारं प्रार्थयते । एवं लोकत्रयविषयान् भोगान् इत आरभ्यामूनमुं चारभ्य इमान् पुनः पुनः बहुप्रकारान् भुञ्जानो विधेयीकृतजगत्त्रयो यथेष्टं वर्तिषीयेति यावत् ॥

[6]तत्र तथा वर्तमानस्य मम इत्थं त्वया कर्तव्यमित्याह—अह्नेति ॥ तथा वर्तमानस्य अह्ना रूपेण स्थित्वा तान् भोगान् प्रसारय तत्तल्लोकविषयान् भोगान् विस्तारय । अह्नि हि पदार्थाः प्रसार्यन्ते । अथ राञ्या रूपेण स्थित्वा रात्रिगतान्

ह्न्या सम॑च । रा॒त्र्या प्रसा॑रय । अह्ना॒ सम॑च । काम॒॑ प्रसा॑रय । काम॒ꣳ सम॑च ॥ ९ ॥

पुरी॑षꣳ समु॒द्रयो॑निः पृथि॒वीं मे॑ यच्छान्तरि॑क्षं मे यच्छ स॒प्त च॑ ॥४॥

[1]भूर्भुव॒स्स्वः॑ । ओजो॒ बल॑म् । ब्रह्म॑ क्ष॒त्त्रम् । यशो॑ म॒हत् । स॒त्यं तपो॒ नाम॑ । रू॒पम॒मृत॑म् । चक्षु॒श्श्रोत्र॑म् । मन॒ आयुः॑ । विश्वं॒ यशो॑ म॒हः । स-

भोगान् समच संकोचय समाकर्षात्मनि । मदर्थं हि रात्रौ भोगास्संगता भवन्ति । ये पुनर्भोगा रात्रौ प्रसार्यन्ते तान् रात्र्या रूपेण प्रसारय रात्रावेव कारय । अह्नो रूपेण समच संकोचय गूढान् कुरु । यद्वा—कस्त्वां नियन्तुं क्षमते कामं यथेष्टं प्रेरय समच च । यद्वा—अस्मदभिलाषानुरूपं प्रसारय समच च । 'अञ्चु गतौ' । 'अचु' इत्येके ॥

इत्येकोनविंशोऽनुवाकः.

---

[1]जघनेन गार्हपत्यमुपविश्य संचितोक्थेन होता शंसति—भूर्भुवस्स्वरिति ॥ प्रथमा षट्पदा जगती । द्वितीया त्रिष्टुप् । व्याहृत्यादिकं सर्वं त्वमेवासि, लोकत्रयं वा भूरादि । ओजः अभिभवशक्तिः । महत् महत्त्वम् । नाम आख्या । यशोऽन्नम् । महः पूजा । समं समत्वं शान्तिः । तपः तापः । हरः दीप्तिः । भाः प्रकाशः । गतमन्यत् ॥

मं तपो हरो भाः । [2]जातवेदा यदि वा पावकोसि । वैश्वानरो यदि वा वैद्युतोसि । शं प्रजाभ्यो यजमानाय लोकम् । ऊर्जं पुष्टिं ददद॒भ्यावंवृत्स्व ॥ १०

भाश्चत्वारि च ॥ ५ ॥

[1]राज्ञीं विराज्ञीं । संम्राज्ञीं स्वराज्ञीं । अर्चिश्शोचिः । तपो हरो भाः । अग्निरिन्द्रो बृहस्पतिः । विश्वेदेवा भुवनस्य गोपाः । ते मा सर्वे यशसा

---

[2]द्वितीया—जातवेदा इति ॥ जातवेदाः ऋत्विग्भिः सोऽपि त्वमेव । यदि वा पावकः पचनाग्निः सोऽपि त्वमेव । वैश्वानरः जाठरः सोऽपि त्वमेव । यदिवा वैद्युतः मध्यमः सोऽपि त्वमेव । तादृशः त्वं शं सुखं प्रजाभ्यः सर्वाभ्यः ददत्, यजमानाय च लोकं स्वर्गादिस्थानं ऊर्जमन्नं पुष्टिं च ददत् अभ्यावर्वृत्स्व आभिमुख्येन पुनः पुनर्वर्तस्व । 'बहुलं छन्दसि' इति शपो लुक् ॥

इति विंशोऽनुवाकः.

---

[1]चतुर्गृहीताहुतिसंस्रावेण यजमानो मुखं विमृष्टे—राज्ञी विराज्ञीति पञ्चपदा । राज्ञ्यादयो देव्यः । अर्चिर्ज्वाला । शोचिराल्लोकः । तपस्तापः । हरो दीप्तिः । भाः भासनम् । अ-

सꣳ सृजन्तु ॥ ११ ॥

राज्ञीन्द्रौ मा सप्त ॥ ६ ॥

[1]असवे स्वाहा वसवे स्वाहा । विभुवे स्वाहा विवस्वते स्वाहा । अभिभुवे स्वाहाऽधिपतये स्वाहा । दिवांपतये स्वाहाऽꣳहस्पत्याय स्वाहा । चाक्षुष्मत्याय स्वाहा ज्योतिष्मत्याय स्वाहा । राज्ञे स्वाहा विराज्ञे स्वाहा । संराज्ञे स्वाहा स्वराज्ञे

---

ग्रन्थादयो देवताः । एते सर्वेऽपि भुवनस्य भूतजातस्य गोपाः गोपायितारः, ते सर्वेऽपि मां यशसा संसृजन्तु संयोजयन्तु॥

इति एकादशोऽनुवाकः.

---

[1]एकविंशतिस्रुवाहुतीर्जुहोति—असवे स्वाहेत्यादि ॥ असुः प्राणभूतस्सर्वस्य । वसुर्वासयिता विश्वस्य । विविधं भावयिता विभूः । विवस्वान् प्रकाशवान् । अभिभूरभिभविता सर्वस्य । अधिपतिः स्वामी । दिवांपतिः इन्द्रः । अंहसां गतीनां पतिरंहस्पतिः स एवांहस्पत्यः, चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । यद्वा—अंहस्पतयो वायुमन्तः महाप्राणाः तानर्हतीति अंहस्पत्यः 'छन्दसि च' इति यः । चक्षुष्मान् दर्शनवान् सूर्यः स एव चाक्षुष्मत्यः । यद्वा—तस्यापत्यं चाक्षुष्मत्यः यमः, तत्र भवः तद्भावं वा अर्हतीति चाक्षुष्मत्यः । ज्योतिषां पतिश्चन्द्रः तत्र भवः ज्योतिष्मत्यः । राजनशीलो राजा । विविधं राजतीति

स्वाहा । शूषाय स्वाहा सूर्याय स्वाहा । चन्द्रमसे स्वाहा ज्योतिषे स्वाहा । सꣳसर्पाय स्वाहा कल्याणाय स्वाहा । अर्जुनाय स्वाहा ॥ १२ ॥

कल्याणाय स्वाहैकं च ॥ ७ ॥

[1]विपश्चिते पवमानाय गायत । मही न धाराऽत्यन्धो अर्षति । अहिर्न जूर्णामतिसर्पति

विराजा । विपूर्वाद्राजतेः कनिन् । संगतं राजतीति संराजा । स्वायत्तं राजतीति स्वराजा । प्रत्ययान्तस्य समासाभावात् समासान्ताप्रसङ्गः । शूषो बलम् । सूर्यः सूतिहेतुर्मण्डलम् । चन्द्रो मीयतेऽस्मिन्निति चन्द्रमाः चन्द्रमण्डलम् । ज्योतिर्नक्षत्रम् । संसर्पः कालः । कल्याणः चेतनः । अर्जुनः व्यापकः परमात्मा । ऋजु गत्यादिषु ॥

इति द्वाविंशोऽनुवाकः

[1]औदुम्बरे पात्रे यूष्णो मृत्युग्रहं गृह्णाति—विपश्चित इति जगत्या ॥ विपश्चिते मेधाविने । पवमानाय शोधकाय धर्माध्यक्षाय गायत शब्दयत स्तुतेत्यर्थः । मही न मह्या इव धारा स्रवन्ती, यद्वा—नेति पादपूरणः । महती धारा यूष्णो रसस्यैषा ग्रहात्मिका अन्धः अदनीयं सर्वं अत्यर्षति अतिगच्छति व्याप्नोति यागद्वारेण, यथा स्रवन्ती रसधारा सर्वं रस्यादि व्याप्नोति 'ऋषि गतौ' तौदादिकः व्यत्ययेन शप् ।

त्वचम् । अत्यो न क्रीडन्नसरद्वृषा हरिः । [2]उपया-
मगृहीतोसि मृत्यवे त्वा जुष्टं गृह्णामि । एष ते
योनिर्मृत्यवे त्वा । [3]अप मृत्युमप क्षुधम् । अपेत-
श्शपथं जहि । अथा नो अग्न आवह । रायस्पोषꣳ
सहस्रिणम् ॥ १३ ॥ [4]ये ते सहस्रमयुतं पाशाः ।

किंच—हेत्युपमायाम् । अहिर्जीर्णा त्वचमिव अतिसर्पति सर्वं जगत्, अयं गृहमिव त्यक्त्वा गच्छति क्षयकाले । क्रीडन् अत्योन अश्व इव असरत् सरति त्यक्त्वा शीघ्रं धावति । वृषा प्रधानः वर्षिता वा कामानां, हरिः हरणशीलः अश्व-नामधेयं वा । सर्तेर्लुङि छान्दसे 'सर्तिशास्त्यर्तिभ्यः' इत्यङ् ॥

[2]इमामनुद्रुत्य गृह्णाति—उपयामगृहीतोऽसीति ॥ व्याख्यातम्* । दर्भैः परिमृज्य वेद्यां सादयति—एष इति । गतं पुरस्तात् ॥

[3]स्विष्टकृतो ग्रहं जुहोति—अपमृत्युमिति द्वाभ्यामनुष्टुब्भ्याम् ॥ हे अग्ने! मृत्युमपजहि अपनय । इतः अस्मत्तः क्षुधं च अपजहि । शपथं आक्रोशं चापजहि । अथ अत एव हेतोः स्थिरजीवित्वात् जीवनाय रायः धनस्य पोषं सहस्रिणं सह-स्रेण प्रमाणेन तद्वन्तमावह आनय अस्माकम् । 'निपातस्य च' इति संहितायां अथशब्दस्य दीर्घः ॥

[4]द्वितीया—हे मृत्यो! ये सहस्रं बहुतराः अयुतं बहुतमाश्च पाशाः बन्धनरज्जवः मर्त्याय हन्तवे मरणधर्माणं मनुष्यं हन्तुं

*सं. १-७-१२.

मृत्यो मर्त्याय हन्तवे । तान् यज्ञस्य मायया । सर्वानवयजामहे । [5]भक्षोऽस्यमृतभक्षः । तस्य ते मृत्युपीतस्यामृतवतः । स्वगाकृतस्य मधुमतः । उपहूतस्योपहूतो भक्षयामि । [6]मन्द्राऽभिभूतिः केतुर्यज्ञानां वाक् । असावेहि ॥ १४ ॥ अन्धो जागृविः प्राण । असावेहि । बधिर आक्रन्दयितरपा-

---

तव स्वभूतास्सन्ति । 'तुमर्थे से सेन्' इति तवेन्प्रत्ययः । तान् सर्वान् यज्ञस्य मायया मात्रया अनुष्ठानेन अवयजामहे नाशयामः ॥

[5]उपहूतायामिडायां ग्रहं भक्षयति—भक्षोऽसीति यजुषा ॥ भक्षोऽसि भक्षणीयोऽसि । अमृतभक्षः अमृतानां अमृत्यूनां भक्षणीयः । तस्य तादृशस्य तव मृत्युना प्रथमं पीतस्य, अमृतवतः अमरणहेतुना रसेन तद्वतः स्वगाकृतस्य स्वीकृतस्य । मधुमत इत्यादि । व्याख्यातम्* ॥

[6]प्राणनिवहानात्मनि प्रतिष्ठापयति—मन्द्राऽभिभूतिरित्यनुवाकशेषेण ॥ सर्वं यजुः । पुनर्मे इति त्रिष्टुप् । मन्द्रा मदहेतुः, अभिभूतिः अभिभवहेतुः, सर्वस्य केतुः ख्यापयित्री, यज्ञानां प्रधानोपकरणं वा भवति वाक् । यस्मादीदृशी त्वं तस्मात् हे असौ! हे ईदृग्भूते वाक्! एहि मय्यागच्छ । असौशब्दस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । अन्धः चक्षुर्हीनः तथाऽपि जागृविः जागरणशीलः प्रवर्तकोऽसि हे प्राण! । यस्मादीदृ-

---

*सं. १-२-५.

न । असावेहि । अहस्तोऽस्त्वा चक्षुः । असावेहि। अपादाशो मनः । असावेहि । कवे विप्रचित्ते श्रोत्र । असावेहि ॥ १५ ॥ सुहस्तस्सुवासाः । शूषो नामास्यमृतो मर्त्येषु । तं त्वाऽहं तथा वेद । अ-

---

शस्त्वमसि तस्मादसौ मय्यागच्छ । एवं सर्वत्र । हे अपान! आक्रन्दयितः शब्दयितः! बधिरः श्रोत्रेन्द्रियरहितोऽसि, तथाऽपि शब्दयिताऽसि । अतो वचनादवगम्यते जात्या बधिरः क्रन्दयितुं शक्नोतीति । अपानग्रहणं प्राणवृत्तीनामुपलक्षणम् । अहस्तः हस्तरहितः । 'नञ् सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अस्त्वा असनकुशलः पुरुषः । अस्यतेः छान्दसे वनिपि तसागमः । तत्सदृशं खलु चक्षुः । हे मनः! हे अपात् पादरहित! हे आशो शीघ्रगामिन्! । उभयत्र षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । केचित्तु—प्रथमं सर्वदाऽनुदात्तमिच्छन्ति, तदा व्यत्ययो द्रष्टव्यः, तयोराविद्यमानत्वान्मनसो निघाताभावः । हे श्रोत्र! कवे क्रान्तज्ञान शब्दग्रहणकुशल! हे विप्रचित्ते प्रकृष्टचैतन्यरहित! । हे शूष बल! त्वं सुहस्तः शोभनहस्तादिसामर्थ्यहेतुः, सुवासाः सुष्ठु वासयिता प्रजानाम् । शूषो नाम त्वमसि शोषयिता शत्रूणाम् । त्वं तु मर्त्येष्वमृत एव वर्तसे । तं तादृशं त्वां अहं वेद जानामि स त्वं मय्येहि ॥

सावेहि । [7]अग्निर्मे वाचि श्रितः । वाग्घृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । वायुर्मे प्राणे श्रितः ॥ १६ ॥ प्राणो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । सूर्यो मे चक्षुषि श्रितः । चक्षुर् हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । चन्द्रमा मे मनसि श्रितः ॥ १७ ॥ मनो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । दिशो मे श्रोत्रे श्रिताः । श्रोत्र्ँ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आपो मे रेतसि श्रिताः ॥ १८ ॥ रेतो हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पृथिवी मे शरीरे श्रिता ।

---

[7]एवममृतत्वाय वागादीनामात्मन्युपगमनं प्रार्थितम् । इदानीमग्न्यादीनामात्मीये वागादौ स्थितिं, वागादीनां च परस्मिन् ब्रह्मणि प्रतिष्ठितत्वं चामृतत्वाय भावयन्नाह—अग्निर्मे इति ॥ अग्निभूतात्मा मे वाचि अग्न्युत्थापितवायूत्पादितायां श्रितः । सा वाक् मम हृदये विज्ञानात्मनि श्रिता तत्परिणामत्वात् । एवं सर्वत्र । तच्च हृदयं मयि ज्ञानात्मनि चेतने श्रितम् । अहं च अमृते अक्षरे परमात्मनि श्रितः । तच्चामृतं ब्रह्मणि अदृश्यत्वादिगुणके परिबृढे वस्तुनि श्रितम् । एवं वाय्वादिषु यो-

शरीरꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ओषधिवनस्पतयो मे लोमसु श्रिताः ॥ १९ ॥ लोमानि हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । इन्द्रो मे बले श्रितः । बलꣳ हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । पर्जन्यो मे मूर्ध्नि श्रितः ॥ २० ॥ मूर्धा हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । ईशानो मे मन्यौ श्रितः । मन्युर् हृदये । हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । आत्मा म आत्मनि श्रितः ॥ २१ ॥ आत्मा हृदये ।

ज्यम् । एवमग्न्यादयो न मत्तः पृथग्भूताः अहं च ब्रह्मणो न पृथग्भूत इति ब्रह्मात्मत्वान्न मे मृत्युरिति । अत्र वाचोऽधिष्ठाताऽग्निः, प्राणस्य वायुः, चक्षुषस्सूर्यः, मनसश्चन्द्रमाः, दिगात्मकं श्रोत्रं, अपां परिणामो रेतः, पृथिवीपरिणामश्शरीरं, ओषधिवनस्पतिपरिणामानि लोमानि । इन्द्रोऽधिष्ठाता बलस्य । पर्जन्यो मे मूर्धाद्यङ्गेषु श्रितः वृष्ट्यादिद्वारेण कारणत्वात् । ईशानः अहंकारः, तत्परिणामो मन्युः बुद्धिः, आत्मा प्रकृतिः महान् वा, स मम आत्मनि शरीरे श्रितः कारणभावेन । गतमन्यत् ॥

हृदयं मयि । अहममृते । अमृतं ब्रह्मणि । [8]पुनर्म आत्मा पुनरायुरागात् । पुनः प्राणः पुनराकूतमागात् । वैश्वानरो रश्मिभिर्वावृधानः । अन्तस्तिष्ठत्वमृतस्य गोपाः ॥ २२ ॥

सहस्त्रिर्णामिहि श्रोत्रासावेहि प्राणे श्रितो मनसि श्रितो रेतसि श्रिता लोमसु श्रिता मूर्ध्नि श्रित आत्मनि श्रितोऽष्टौ च ॥ ८ ॥

अग्निर्वायुस्सूर्यश्चन्द्रमा दिश आपः पृथिव्योषधिवनस्पतय इन्द्रः पर्जन्य ईशान आत्मा पुनर्मे त्रयोदश ॥

---

[8]पुनर्म इत्यादि ॥ एवममृतीभूतत्वात् आत्मा हृदयं, आयुः जीवितं, प्राणः आकूतं मनश्च मां पुनरागच्छन्तु गतान्यपि मामेव पुनराश्रयन्ताम् । वैश्वानरो जाठरश्चाग्निः रश्मिभिः वावृधानः वर्धमानः । छान्दसस्य लिटः कानजादेशः । शारीरस्यान्तस्तिष्ठतु अमृतस्य गोपाः अमृतस्य आत्मनो वा गोपायिता रक्षिता अन्तस्संतिष्ठतु । आयप्रत्ययान्तात् क्विपि अतोलोपवलिलोपापृक्तलोपाः ॥

इति प्रथमे काठके त्रयोविंशोऽनुवाकः.

[1]प्रजापतिर्देवानसृजत। ते पाप्मना संदिता अजायन्त । तान्व्यद्यत् । यद्व्यद्यत् । तस्माद्विद्युत् । तमवृश्चत् । यदवृश्चत् । तस्माद्वृष्टिः । तस्माद्यत्रैते देवते अभियाप्नुतः। वि च हैवास्य तत्र पाप्मानं द्यतः ॥ २३ ॥ वृश्चतश्च । [2]सैषा मीमाꣳसाऽग्निहोत्र एव संपन्ना । अथो आहुः । सर्वेषु यज्ञक्रतुष्विति । होष्यन्नप उपस्पृशेत् । विद्युदसि विद्य मे पाप्मानमिति । अथ हुत्वोपस्पृशेत् । वृष्टिरसि

---

[1]अथ सावित्रब्राह्मणं त्रयोऽनुवाकाः—प्रजापतिर्देवानित्यादि॥ संदिताः संबद्धाः । व्यद्यत् पाप्मना व्यश्लेषयत् । तस्मात् सा प्रजापतेस्तनुः विद्युन्नाम्न्यभवत्, यया विद्यति स्म । द्यतेरौणादिक इतिप्रत्यये धातोरिकारान्तत्वम्, यणादेशश्च । अथ तं पाप्मानं अन्यया तन्वा अवृश्चत् छिनत्ति स्म । सा वृष्टिरभवत् । क्तिनि व्रश्चादिना षत्वम् । तस्मात् एते देवते यत्र कर्मादौ अभिप्राप्नुतः आभिमुख्येन संनिधत्तः तत्र कर्तुः पाप्मानं विद्यतः वृश्चतश्च ॥

[2]सैषेति ॥ मीमांसित्वा निर्णीतोऽर्थो मीमांसा। सा अग्निहोत्रविषयैव संपन्ना राद्धान्तिता—अग्निहोत्र एव एते देवते अभिप्राप्नुत इति । अथो आहुः अन्ये—सर्वेष्वपि यज्ञक्रतुषु अभिप्राप्ये इति मीमांसितं न इति । प्रथमपक्षे विधिः—

वृश्चं मे पाप्मानमिति । यक्ष्यमाणो वेष्टा वा । वि
चं हैवास्यैते देवते पाप्मानं घ्नतः ॥ २४ ॥ वृश्च-
तश्च । [8]अत्यꣳहो हारुणिः । ब्रह्मचारिणे प्रश्नान्प्रो-
च्य प्रजिघाय । परेहि । प्लक्षं दैयाम्पातिं पृच्छ ।
वेत्थ सावित्रां ३ न वेत्था ३ इति । तमागत्य पप्र-
च्छ । आचार्यो मा प्राहैषीत् । वेत्थ सावित्रां ३ न
वेत्था ३ इति । स होवाच वेदेति ॥ २५ ॥ स क-

होष्यमित्यादि । द्वितीयपक्षे—यक्ष्यमाणो वेत्यादि । विद्यु-
दिति यक्ष्यमाणः वृष्टिरितीष्टा । तत्र पाप्मानं विघ्नतो वृश्चतश्च
एते देवते ॥

[8]अत्यंह इत्यादि ॥ अरुणस्यापत्यं अत्यंहो नाम कस्मै
चिद्ब्रह्मचारिणे प्रश्नान् वक्ष्यमाणान् सावित्रस्य स्वरूपप्रतिष्ठा-
दिविषयान् प्रोच्य प्रजिघाय तं प्राहिणोति स्म । 'हेरचङि'
इति कुत्वम् । इत्थं वदन्, ब्रह्मचारिन्! परेहि गच्छ प्लक्षं
द्यांपातस्यापत्यम् । 'अत इञ्' द्वारादित्वादैजागमः । तं पृच्छ
सावित्रमग्निं सप्रतिष्ठादिकं वेत्थ किं वा न वेत्थ इति । 'वि-
चार्यमाणानाम्' इत्युभयत्र प्लुतः । एवमारुणिना प्रहितो ब्रह्म-
चारी तं प्लक्षं आगत्य पप्रच्छ—आचार्यः कांश्चित्प्रश्नान्
प्रष्टुं मां प्राहैषीत् मन्मुखेनाचार्यः पृच्छतीत्यवधारयितव्यम् । इदं
पृच्छामि—किं सावित्रं वेत्थ? उत न वेत्थ? । अथ प्लक्ष उवाच—

स्मिन्प्रतिष्ठित इति । परोरजसीति । कस्तद्यत्प-रोरजा इति । एष वाव स परोरजा इति होवा-च । य एष तपति । एषोऽर्वाग्रजा इति । स क-स्मिन्त्वेष इति । सत्य इति । किं तथ्सत्यमिति । तप इति ॥ २६ ॥ कस्मिन्नु तप इति । बल इति ।

---

वेद सावित्रमिति । ब्रह्मचारी पृच्छति—स कस्मिन्निति । प्लक्ष उवाच—परोरजसीति । रजसस्तमस आकाशात्परस्ताद्वर्तत इति परोरजाः । पारस्करादित्वात्सुट्, सकारान्तं वा अव्ययम् । ब्रह्मचारी पुनः पृच्छति—कस्तदिति । प्लक्ष उवाच—एष वावेति । य एष तपत्यादित्यः एष परोरजा अर्वाग्रजाश्च अधस्तादुपरिष्टच्च प्रकाशयतीति लोकत्रयात्मा । ब्रह्मचारी पृ-च्छति—स कस्मिन्निति । त्वेषो दीप्तिः । प्लक्ष उवाच—सत्य इति । साधु सत्यम् । ब्रह्मचारी पुनः पृच्छति—किं तदिति । प्लक्ष उवाच—तप इति । ब्रह्मचारी पृच्छति—कस्मिन्निति । प्लक्ष उवाच—बल इति । विलक्षणे बले । ब्रह्मचारी पृच्छति—किं तदिति । प्लक्ष उवाच—प्राण इति । सर्वपरिस्पन्दात्मा ईश्वरस्य क्रियाशक्त्याधारः परमाक्षरम् । एवं प्राणात्मकबलाधीनं तपः, तदात्मनि सत्ये दीप्यते आदित्यः, स एव लोका इमे तदधीनात्मलाभत्वात्, तस्मिन् लोकत्रयात्मनि आदित्ये प्रतिष्ठितस्सावित्रः कालचक्रात्मा अग्निः पाचको भूतानां स एव प्राणो विश्वं धारयतीति ॥

किं तद्बलमिति । प्राण इति । [4]मा स्मं प्राणमति पृच्छ इति माऽऽचार्योऽब्रवीदिति होवाच ब्रह्मचारी । स होवाच प्लक्षो दैयाम्पातिः । यद्वै ब्रह्मचारिन्प्राणमत्यप्रक्ष्यः । मूर्धा ते व्यपतिष्यत् । अहमु त आचार्याच्छ्रेयान्भविष्यामि । यो मा सावित्रे समवादिष्टेति ॥ २७॥ तस्मात्सावित्रे न संवदेत ।

---

[4]अथ ब्रह्मचारी कः प्राण इति पुनः प्रश्नमकुर्वन् स्थितः। प्रश्नाकरणे कारणमुवाच—मा स्मेत्यादि ॥ स यदि प्राणान्तं प्रतिब्रूयात् तदा प्राणमतीत्य अन्यमर्थं मा स्म पृच्छ इत्या-चार्यो मामब्रवीत्, तस्मादाचार्यवचोगौरवान्नातःपरं पृच्छामीति ब्रह्मचारिणोक्ते प्लक्षो दैयांपातिः प्राणमतिप्रश्नं निषेधत आरु-णेरभिप्रायमुवाच—यद्वा इति । सावित्रस्य प्राणत्वात् प्राणाति-प्रश्ने तव नाशस्स्यादिति तवाचार्यस्तन्निषेधमकरोत् । क्रियाऽ-तिपत्तौ लृङ् । एवं शिष्यरक्षावधानमाचार्यस्योक्त्वा ममाप्युप-कृतं तवाचार्येणेति दर्शयितुमाह—अहमिति । तव आचार्या-दप्यहमेव श्रेयान् प्रशस्यतरो भविष्यामि। कोऽस्याविनय इति चेत् यो मा सावित्रे विषये समवादिष्ट मया सह संवादं कृतवान् । तस्मात् मात्सर्येण सावित्रस्वरूपविचारणमयुक्तमिति दर्शितम् । यद्वा—भासने आत्मनेपदं सावित्रज्ञानातिशयमात्मनः ख्यापयितु प्रश्नक्रमेण यस्संवदते भासमानो वादं प्रवर्तयतीति। अपरे तु ब्रुवते—प्रश्नव्याजेनाज्ञातानामर्थानां परकीयज्ञानादानेन

स यो ह वै सावित्रं विदुषा सावित्रे संवदते । स हास्मिञ्छ्रियं दधाति । अनु ह वा अस्मा असौ तपञ्छ्रियं मन्यते । अन्वस्मै श्रीस्तपो मन्यते । अन्वस्मै तपो बलं मन्यते । अन्वस्मै बलं प्राणं मन्यते । स यदाह । संज्ञानं विज्ञानं दर्शा दृष्टेति । एष एव तत् ॥२८॥ अथ यदाह । प्रस्तुतं विष्टुतꣳ सुता सुन्वतीति । एष एव तत् । एष ह्येव तान्यहानि । एष रात्रयः । अथ यदाह । चित्रः

---

प्रच्छन्नाधिगमस्संवाद इति । तदिदं सावित्रविषये न कुर्यात् । अथ यः कुर्यात् स आत्मीयां श्रियं ज्ञानातिशयमस्मिन् दधाति स्थापयति ज्ञानातिशयवन्तं तमेव करोति । अथासावादित्योऽपि अस्मा एव श्रियमनुमन्यते । अथ सा च श्रीरस्मा एव तपोऽनुमन्यते । अथ तच्च तपोऽस्मा एव बलमनुमन्यते । अथ तच्च बलं अस्मा एव प्राणमनुमन्यते । एवं प्राणेऽपहृते सावित्रविद्यैवापहृता भवतीति सावित्रविन्न स्यात् ॥

[5]इदानीमुपधानमन्त्रपदानि व्याचष्टे—स यदाहेत्यादि ॥ संज्ञानादिभिरहरादिवाचकैः पदैरेष आदित्य एवोच्यते तदधीनात्मलाभत्वात्तेषाम् । तदेवाह—एष ह्येवेति । एतत्प्रवृत्त्यधीनानि अहानि रात्रयश्चेत्यर्थः । तस्मादेष एवेत्यवोचामेति । संज्ञानादीनि पूर्वपक्षस्याहानि, दर्शादयः पूर्वपक्षस्य रात्रयः । प्रस्तुतादीन्यपर-

केतुर्दाता प्रदाता संविता प्रसविताऽभिशास्ताऽनुमन्तेति । एष एव तत् । एष ह्येव तेऽह्नो मुहूर्ताः। एष रात्रेः ॥ २९ ॥ अथ यदाह । पवित्रं पवयिष्यन्थ्सहस्स्वान्थ्सहीयानरुणोऽरुणरजा इति । एष एव तत् । एष ह्येव तेऽर्धमासाः । एष मासाः । अथ यदाह । अग्निष्टोम उक्थ्योऽग्निर् ऋतुः प्रजापतिस्संवथ्सर इति । एष एव तत् । एष ह्येव ते यज्ञक्रतवः । एष ऋतवः ॥ ३० ॥ एष संवथ्सरः । अथ यदाह । इदानीं तदानीमिति । एष एव तत्। एष ह्येव ते मुहूर्तानां मुहूर्ताः । [6]जनको ह वैदेहः । अहोरात्रैस्समाजगाम । तꣳ होचुः । यो वा अस्मान् वेद । विजहत्पाप्मानमेति ॥ ३१ ॥ सर्व-

पक्षस्याहानि, सुतेत्यादीन्यपरपक्षस्य रात्रयः । चित्रादयः पूर्वपक्षस्याह्नो मुहूर्ताः, दात्रादयस्तस्यैव रात्रेर्मुहूर्ताः । सवित्रादयोऽपरपक्षस्याह्नो मुहूर्ताः, अभिशास्त्रादयस्तस्यैव रात्रेर्मुहूर्ताः । पवित्रादयः पूर्वपक्षाः, सहस्वदादयोऽपरपक्षाः । अरुणादयो मासाः, अग्निष्टोमादयो यज्ञक्रतवः, अग्न्यादय ऋतवः । गतमन्यत् ॥

[6] जनको हेत्यादि ॥ जनको नाम विदेहस्यापत्यम् । 'जनपदशब्दात् क्षत्रियादञ्' । स सावित्रविद्यया अहोरात्रैस्समाजगाम सायुज्यं

मायुरेति । अभि स्वर्गं लोकं जयति । नास्यामु-
ष्मिन्लोकेऽन्नं क्षीयत इति । विजहद्ध वै पाप्मा-
नमेति । सर्वमायुरेति । अभि स्वर्गं लोकं जय-
ति । नास्यामुष्मिन्लोकेऽन्नं क्षीयते। य एवं वेद।
[7]अहीना हाश्वत्थ्यः । सावित्रं विदांचकार ॥ ३२ ॥
सह हꣳसो हिरण्मयो भूत्वा । स्वर्गं लोकमियाय।
आदित्यस्य सायुज्यम् । हꣳसो ह वै हिरण्मयो

सहवासं गतवान् । तं जनकं अहोरात्रा ऊचुः—यस्त्वमिवास्मानेवं प्रभावान् वेद जानाति स पाप्मानं विजहत् विमुञ्चन् एति अविच्छेदेन वर्तते । विजहद्ध वा इत्यादिर्विदुषस्स्तुतिः ॥

[7]अहीना नाम आश्वत्थ्यः अश्वत्थस्यापत्यं, गर्गादित्वाद्यञ्। स सावित्रमहिम्ना हिरण्मयहंसभूतः स्वर्गं गतः, आदित्यस्य सायुज्यं च गतः । हंसो हेत्यादिर्विदुषस्स्तुतिः ॥

[8]देवभागो नाम गौतमगोत्रः श्रुतर्षेरपत्यं श्रौतर्षः । ऋष्यण्। तं सावित्रविदं अदृश्यमाना वागभ्युवाच—अयं सावित्रवेदी गौतमस्सर्वं वेदेति सावित्रे सर्वस्यान्तर्भूतत्वात् । अथ देवभाग उवाच—कैषा उत्थिता वाक्? कैषा त्वमसि? इति । अथ सा वागुवाच—सावित्रोऽहमस्मि यो हि देवानामुत्तमो लोकः उद्गततमं स्थानं, गुह्यं गुहायां निहितं महः तेजः बिभ्रत्, तादृशो देवानामप्याधारस्सावित्रोऽहमस्मीति । एवं स्वयमेवात्मा-

भूत्वा । स्वर्गं लोकमेति । आदित्यस्य सायुज्यम् । य एवं वेद । [8]देवभागो ह श्रौतर्षः । सावित्रं विदांचकार । तꣳ ह वागदृश्यमानाऽभ्युवाच ॥ ३३ सर्वं बत गौतमो वेद । यस्सावित्रं वेदेति । स होवाच । कैषा वागसीति । अयमहꣳ सावित्रः । देवानामुत्तमो लोकः । गुह्यं महो बिभ्रदिति । एतावति ह गौतमः । यज्ञोपवीतं कृत्वाऽधो निपपात । नमो नम इति ॥ ३४॥ स होवाच । मा भैषीर्गौतम । जितो वै ते लोक इति । तस्माद्ये के च सावित्रं विदुः । सर्वे ते जितलोकाः । [9]स

नमाविष्कृतवान् देवभागाय सावित्र इति भावः । अथ गौतमः एतावति सावित्रेणोक्ते असावित्रज्ञमात्मानं मन्यमानः, कैषाऽसीति च पर्यनुयोगेन सापराधमिवात्मानमवगच्छन् 'देवानामुत्तमो लोकः' इति श्रुत्वा तादृशोत्तमलोकहीनमिवात्मानं निश्चिन्वन् यज्ञोपवीतं कृत्वा संनद्धो भूत्वा नमो नम इति वदन् अधो निपपात पृथिव्यां निपतितदेहो बभूव । अथ सावित्र उवाच—स होवाचेत्यादि । मा भैषीरिति । सावित्रविदेवासि, जितलोक एव चासि तस्मान्न भेतव्यं, पर्यनुयोगापराधो नमस्कारक्षालित इति । तस्मादन्येऽपि सावित्रविदो जितोत्तमलोकाः ॥

[9]स यो ह वा इत्यादि ॥ सावित्रस्याग्नेर्वाचकमष्टाक्षरं पदम-

यो ह वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तं वेद । श्रिया हैवाभिषिच्यते । घृणिरिति द्वे अक्षरे । सूर्य इति त्रीणि । आदित्य इति त्रीणि ॥ ३५ ॥ एतद्वै सावित्रस्याष्टाक्षरं पदꣳ श्रियाऽभिषिक्तम् । य एवं वेद । श्रिया हैवाभिषिच्यते । तदेतदृचाऽभ्युक्तम् । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा

मिधानं श्रियाऽभिषिक्तं सर्वविभूत्याधारत्वात् । सावित्रस्य तद्धेतुत्वाद्वा । केचिदाहुः—'सा हि श्रीरमृता सताम्' * इति सर्ववेदाभिषिक्तः तत्सारत्वात्, सर्ववेदात्मा प्रणवः श्रीः तेनाभिषिक्तं तद्वन्तमिति वा । सूर्य इति त्रीणि इत्यादिपूरणात् । एतेन जानीमः एकपदेयं गायत्रीति । पादः पदमिति केचित् । तदेतदित्यादि । इदमेवार्थरूपमभिलक्ष्य इयमृग्वदति । ऋच इति । उक्तः प्रपञ्चाधारः परमाक्षरं सावित्र इति । 'तस्याग्निर्मुखम्, असावादित्यश्शिरः । स यदेते देवते अन्तरेण । तत्सर्वं सीव्यति । तस्मात्सावित्रः'† इति वक्ष्यति । तत्र घृणिः अग्निः मुखं, आदित्यश्शिरः, मध्य आत्मा सूर्यस्सावित्र इति । सीव्यतीति सूर्यः इति राजसूयसूर्यादौ सिवेः निपातनमिति भावः । एवं विश्वाधारभूते परमे अक्षरे अविनाशे व्योमन् विविधरक्षणे यस्मिन् ऋचो वेदाः सर्वे देवाः सर्वेऽपि विकाराः निषेदुः निषीदन्ति

* ब्रा १-२-१. † ब्रा ३-१०-११.

करिष्यति । य इत्तद्विदुस्त इमे समासत इति । न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति। यस्सावित्रं वेद ॥३६॥ [10]तदेतत्परियदैवचक्रम् । आर्द्रं पिन्वमानꣳ स्वर्गे लोक एति । विजहद्विश्वा भूतानि संपश्यत् । आर्द्रो ह वै पिन्वमानस्स्वर्गे लोक एति । विजहन्विश्वा भूतानि संपश्यन् । य

आधेयत्वेन वर्तन्ते तत्परिणामत्वात् । तत्तादृशं विश्वाधारं यो न वेद याथार्थ्येन न जानाति स किमृचा आधेयैर्वेदादिभिः करिष्यति साधयति । ये पुनस्तद्विदुः जानन्ति त इमे समासते इति, एवं विनाऽपि वेदादिभिस्सम्यगासते नित्यसत्रासना एव भवन्ति । अत्रैवार्थे चतुर्थपादं ब्राह्मणं योजयति—न ह वा इति ॥

[10]तदेतदित्यादि ॥ तदेतद्देवमयं चक्रं कारणं जगतां मण्डलात्मकं परियत् पर्यावर्तमानं आर्द्रं वृष्ट्यादिहेतुः अशुष्कं वा परिणामयोग्यं, पिन्वमानं सिञ्चत् विश्वमुत्पादयत् । 'पिवि सेचने' इदित्वान्नुम् । ईदृशमिदं जगत्कारणमभवत् । स्वर्गे लोके परमसुखात्मनि उपवृत्ते आत्मनि स्थाने एति गच्छति गमयति वा । कीदृशं? विजहत् त्यजत् विश्वानि भूतानि तैरसंपृक्तमेव संपश्यत् सम्यक्पश्यत्तानि । यद्वा—शान्तविकारं पदं पश्यत् । आर्द्रो ह वा इत्यादिर्विदुषस्स्तुतिः । समृद्धमनोरथ आर्द्रो ततो विमुक्तस्स्वात्मनि तिष्ठतीति । विजहन्निति छान्दसो नुमागमः ॥

एवं वेद । [11]शूषो ह वै वार्ष्णेयः । आदित्येन सु-
माजगाम । तꣳ होवाच । एहि सावित्रं विद्धि ।
अयं वै स्वर्ग्योऽग्निः पारयिष्णुरमृतात्संभूत इति ।
एष वाव स सावित्रः । य एष तपति । [12]एहि मां
विद्धि । इति हैवैनं तदुवाच ॥ ३७ ॥

यतो यतो वेदेति तप इति समवादिष्टेति तद्रा-
त्रेर् ऋतवं एति चकारोवाच नम इत्यादित्य इति
त्रीणि सावित्रं वेद विद्धि पञ्च च ॥ १ ॥

प्रजापतिर्देवान्त्संज्ञानं प्रस्तुतं तान्यहान्येष रा-

---

[11]शूषो ह वा इत्यादि ॥ शूषो नाम वृष्णेरपत्यम् । 'इत-श्चानिञः' इति ढक् । स आदित्येन समाजगाम सावित्रवि-द्यया तेन सहवासमलभत । अथादित्यस्तमुवाच—एहीत्यादि । अयं सावित्रोऽग्निस्स्वर्ग्यः परमसुखहेतुः, पारयिष्णुः सर्वदुरि-तेभ्य उत्तारयिता अमृताक्षरमय इति । इदानीमादित्यसावित्रयोः अभेदं ब्राह्मणं प्रतिपादयति—य एष तपतीति । एष आ-दित्य एव सावित्र इति । एतदधीनत्वाद्विश्वरूपपरिणामस्य ॥

[12]ननु यद्यादित्य एव सावित्रः तर्हि पृथक्त्वेन सावित्रं विद्धि, अयं वा इति कथं ब्रूयात्? कथं तर्हि ब्रूयात्? मां विद्धि अहं वा इति । तस्मादेष सावित्र इत्यभेदोक्तिरयुक्तेति पर्यनु-

त्रयश्चित्रः केतुस्तेऽह्नो मुहूर्ता रात्रेः पवित्रं तेऽर्ध-मासा अग्निष्टोमो यज्ञक्रतव इदानीं मुहूर्तानां जन-कोऽह्नीना देवभागः कैषा वाङ्ग्रा शूषो ह वै षोडश॥

[1]इयं वाव सरघा। तस्या अग्निरेव सारघं मधु। या एताः पूर्वपक्षापरपक्षयो रात्रयः। ता मधुकृतः। यान्यहानि। ते मधुवृषाः। स यो ह वा एता मधुकृतश्च मधुवृषाश्श्च वेद। कुर्वन्ति हास्यैता अग्नौ मधु। नास्येष्टापूर्तं धयन्ति। अथ यो न वेद ॥३८॥ न हास्यैता अग्नौ मधु कुर्व-

योगावसरे आदित्यवाक्यस्याभिप्रायमाह—एहि मां विद्धि अहं वै स्वर्ग्योऽग्निरित्येवमेव तदानीमुक्तवान् वार्ष्णेयमादित्यः। अतो नैक्यविरोध इत्यभिप्रायः॥

इति प्रथमे काठके चतुर्विंशोऽनुवाकः.

[1]इयं वावेत्यादि॥ इयं पृथिवी सरघा मधुकोशः, तस्याः पृथिव्यास्सम्बन्धि सावित्रोऽग्निरेव सारघं मधुस्थानीयः। रात्रयो मधुकृतः मधुत्वसंपादिन्यः मधुकर्यो वा। अहानि मधुवृषाः मधुन आहर्तारः पुमांसो वा। इगुपधलक्षणः कः। स य इत्यादि। एतद्विदित्वा चिन्वानस्यैवाग्नौ सावित्रेऽस्मिन् मधु इष्टं फलं कुर्वन्ति, रात्रयोऽहानि च अस्येष्टापूर्तफलं च न

न्ति । धयन्त्यस्येष्टापूर्तम् । [2]यो ह वा अहोरात्राणां नामधेयानि वेद । नाहोरात्रेष्वार्तिमार्च्छति । संज्ञानं विज्ञानं दर्शा दृष्टेति । एतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानि । प्रस्तुतं विष्टुतꣳ सुता सुन्वतीति । एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानि । नाहोरात्रेष्वार्तिमार्च्छति । य एवं वेद ॥३९॥ यो ह वै मुहूर्तानां नामधेयानि वेद । न मुहूर्तेष्वार्तिमार्च्छति । चित्रः केतुर्दाता प्रदाता सविता प्रसविताऽभिशास्ताऽनुमन्तेति । एतेऽनुवाका मुहूर्तानां नामधेयानि । न मुहूर्तेष्वार्तिमार्च्छति । य एवं वेद । यो ह वा अर्धमासानां च मासानां च नामधेयानि वेद । नार्धमासेषु न मासेष्वार्तिमार्च्छति । पवित्रं पवयिष्यन्थ्सहस्वान्थ्सहीयानरुणोऽरुणरजा इति । एतेऽनुवाका अर्धमासानां च मासानां च नामधेयानि ॥४०॥ नार्ध-

धयन्ति न पिबन्ति न नाशयन्ति । यज्ञेनेष्टं पक्केन पूर्तम् । अविदुषो न कुर्वन्ति मधु, धयन्ति चेष्टापूर्तम् ॥

[2]यो ह वा इत्यादि ॥ गतम् । प्रथम आर्तिनिषेधो

मासेषु न मासेष्वार्तिमार्च्छति। य एवं वेद। यो ह वै यज्ञक्रतूनां चर्तूनां च संवथ्सरस्य च नामधेयानि वेद। न यज्ञक्रतुषु नर्तुषु न संवथ्सर आर्तिमार्च्छति। अग्निष्टोम उक्थ्योऽग्निर् क्रतुः प्रजापतिस्संवथ्सर इति। एतेऽनुवाका यज्ञक्रतूनां चर्तूनां च संवथ्सरस्य च नामधेयानि। न यज्ञक्रतुषु नर्तुषु न संवथ्सर आर्तिमार्च्छति। य एवं वेद। यो ह वै मुहूर्तानां मुहूर्तान् वेद। न मुहूर्तानां मुहूर्तेष्वार्तिमार्च्छति ॥४१॥ इदानीं तदानीमिति। एते वै मुहूर्तानां मुहूर्ताः। न मुहूर्तानां मुहूर्तेष्वार्तिमार्च्छति। य एवं वेद। [3]अथो यथा क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्नमत्ति। एवमेवैतान्क्षेत्रज्ञो भूत्वाऽनुप्रविश्यान्नमत्ति। स एतेषामेव सलो-

---

ज्ञात्वाऽनुष्ठातुः, द्वितीयो वेदितुः। एवमीदृशीभिर्महानुभावाभिरिष्टकाभिरयं चीयत इति सावित्रस्यैव स्तुतिः॥

[3]अथो यथेत्यादि॥ क्षेत्रं भूमिश्शरीरं वा। विशिष्टं क्षेत्रं जानन् लभमानो भूत्वा तदनुप्रविश्य च भोक्तव्यमभिमतं सर्वं भुङ्क्ते, ते चैतस्य क्षेत्रतां भजन्ते, ततोऽसावेतेषामेव सलोकतां

कृता॒ᳫं सायु॑ज्यमश्नुते । अप॑ पुनर्मृ॒त्युं ज॑यति । य ए॒वं वेद॑ ॥४२॥

न वे॑दै॒वं वेदा॑नुवा॒का अ॑र्धमा॒सानां॑ च॒ मासा॑नां च नाम॒धेया॑नि मुहू॒र्तेष्वा॒र्तिमा॒र्च्छति॒ नव॑ च॥

इ॒यम॑हो॒रा॒त्राणा॒ᳫं सं॒ज्ञानं॑ पूर्वप॒क्षस्य॒ प्रस्तु॑तम॒परप॒क्षस्य॑ मुहू॒र्ताना॑ञ्चि॒त्रः के॒तुर॑र्धमा॒साना॑म्प॒वि॒त्रं॑ य॒ज्ञक्र॒तू॒नाम॑ग्नि॒ष्टोमो॑ य॒ज्ञक्र॒तू॒नामि॒दानीं॑ मुहू॒र्ता॒नां॑ मुहू॒र्तान्वे॑दे॒दा॒नी॒मथो॒ द्वाद॑श ॥

[1]कश्चि॒द्ध वा अ॒स्माल्लो॒कात्प्रेत्य॑ । आ॒त्मानं॑ वेद॑। अ॒यम॒हम॒स्मीति॑ । कश्चि॒त्स्वं लो॒कं न प्रति॒ प्रजा॑-

---

सायुज्यं सयुग्भावं चाश्नुते प्राप्नुते । अपपुनर्मृत्युमित्यादि विदुषस्स्तुतिः ॥

इति प्रथमे काठके पञ्चविंशोऽनुवाकः.

---

[1]कश्चिद्ध वा इत्यादि ॥ कश्चिदस्मान्मनुष्यलोकात् प्रेत्य परेत्य आत्मानं वेद जानाति निजमात्मस्वरूपं शुद्धमवगच्छति अयमीदृशोऽहमस्मीति । कश्चित्तु प्रेत्य स्वर्गलोकभोक्तव्यमात्मीयस्थानं न प्रतिप्रजानाति प्रतिमुखं गन्तुं न प्रजानाति । लोकमपि न जानाति, का कथा आत्मानमिति भावः । कथं विद्य-

नाति । अग्निमुंग्धो हैव धूमतान्तः । स्वं लोकं न प्रति प्रजानाति। [2]अथ यो हैवैतमग्निꣳ सावित्रं वेद । स एवास्माल्लोकात्प्रेत्य । आत्मानं वेद । अयमहमस्मीति ॥४३॥ स स्वं लोकं प्रति प्रजानाति । एष उवेवैनं तथ्सावित्रः । स्वर्गं लोकमभिवहति । [3]अहोरात्रैर्वा इदꣳ सयुग्भिः क्रियते ।

---

मानमेव न ज्ञायत इत्याह—अग्निमुग्ध इति । अग्निमुग्धः खलु अग्न्यभिभवेन मूर्छां गत आत्मानं न जानाति, धूमतान्तः धूमव्याकुलितदृष्टिश्चापि स्वं लोकं गन्तव्यं स्थानं न प्रति प्रजानाति । एवमेव कश्चिद्धूमस्थानीयेन अज्ञानेन तान्तः कर्मसु सक्त आत्मानमात्मीयं च लोकं न जानाति । उभयत्रापि 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् ॥

[2]कः पुनरात्मानं वेद स्वं च लोकं प्रति प्रजानातीत्याह—अथ य इत्यादि ॥ सावित्रविदात्मानं जानाति । स यदि पुण्यलोककामो भवति तं प्रतिगन्तुमपि जानाति । ननु लोककामनायां कर्मानुगुणलोककामी स्यात् तत्कोऽस्य विशेष इत्याह—एष उ वेवेत्यादि । तत् तदानीमेव सावित्र एनं सावित्रविदं स्वर्गं लोकमेवाभिवहति सुखैकस्थानमेवाभिप्रापयति ॥

[3]ननु कर्मानुगुणं लोकं गच्छति, तत्किं सावित्रेणेत्याह—अहोरात्रैर्वा इति ॥ अहोरात्रैस्सयुग्भिः समानयोगैस्सहकारिभिः खल्विदं यत्किञ्चिज्ज्योतिष्टोमादिकं कर्म क्रियते । कथम्?

इतिरात्रायादीक्षिषत । इतिरात्रायं व्रतमुपांगुरिति। तानिहानेवंविदुषः । अमुष्मिन्लोके शेवधिं धंयन्ति । धीतꣳ हैव स शेवधिमनु परैति । ⁴अथ यो हैवैतमग्निꣳ सावित्रं वेद ॥ ४४ ॥ तस्य हैवाहोरात्राणि । अमुष्मिन्लोके शेवधिं न धंयन्ति । अ-

---

इतिरात्रायादीक्षिषत इत्थंप्रकारा रात्रिरितिरात्रिः एकरात्रिर्दीक्षा तिस्रो दीक्षा चतस्रो दीक्षेति । 'क्रियाग्रहणं कर्तव्यम्' इति संप्रदानत्वाच्चतुर्थी । एवमीदृशीं दीक्षां कृतवन्त इति वदन्तो रात्र्यवच्छिन्नां दीक्षां वदन्ति । तथा इतिरात्राय व्रतमुपागुरिति व्रतोपायनावच्छेदं रात्रिभिः कुर्वन्ति एकां रात्रिं व्रतमुपागुः द्वादशरात्रीरित्यादि । एवं सर्वं कर्माहोरात्रैस्सयुग्भिः क्रियत इति । अस्तु ततः किमित्याह—तानित्यादि । तानहोरात्रानिष्टकारूपेण स्थितानेवंप्रभावान् अविदुषः अजानतः पुरुषस्य अमुष्मिन् लोके शेवधिं निधिस्थानीयं फलं धयन्ति पिबन्ति नाशयन्ति, ततस्सोऽविद्वान् धीतं पीतं शून्यं शेवधिं अनु लक्षीकृत्य परैति ॥

⁴अथेत्यादि ॥ अहोरात्रेष्टकावान्तरसावित्रं यो वेद तस्य शेवधिं अहोरात्रा न धयन्ति । ततस्स विद्वान् अधीतं सम्पूर्णमेव शेवधिं अनु लक्षीकृत्य परैति, तदवोचाम सावित्र एवंविद्वांसं स्वर्गं लोकमभिवहतीति तस्माद्विदुषा भवितव्यमिति ॥

धीतꣳ हैव स शेवधिमनु परैति । [5]भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास । तꣳ ह जीर्णिꣳ स्थविरꣳ शयानम् । इन्द्र उपव्रज्योवाच । भरद्वाज । यत्ते चतुर्थमायुर्दद्याम् । किमेनेन कुर्या इति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच ॥ १५ ॥ तꣳ ह त्रीन्गिरिरूपानविज्ञातानिव दर्शयांचकार । तेषाꣳ हैकैकस्मान्मुष्टिनाऽऽददे । स होवाच । भर-

[5]भरद्वाज इत्यादि ॥ त्रिभिरायुर्भिः पुरुषायुषस्य त्रिभिरंशैः ब्रह्मचर्यं ब्रह्म वेदः तदर्थं व्रतं ब्रह्मचर्यं तन्निमित्तं गुरुकुले उवास ब्रह्मचर्यमेव वा गुरुकुलवासेन कृतवान् गुरुकुले स्थितो वेदानधिजगे । अथ जीर्णिं जरां प्राप्तम् । औणादिको निप्रत्ययः । स्थविरं स्थावरकल्पं शयानं निश्चेष्टं उपव्रज्य उपसंगम्य इन्द्र उवाच—हे भरद्वाज! यद्यहं चतुर्थमप्यायुषोऽशं तुभ्यं दद्यां किमनेन कालेन त्वं कुर्याः? इति । अथ भरद्वाज उवाच—ब्रह्मचर्यमेव एनेनाप्यायुषा चरेयं नानधीत्य सर्वान् वेदान् ब्रह्मचर्याद्विरमेयमिति । अथ कृत्स्नवेदाध्ययनस्य अशक्यतां दर्शयितुं गिरिरूपान् प्रशस्तान् पर्वतान् वेदमयान्, प्रशंसायां रूपप् । त्रीन् त्रयीलक्षणानविज्ञातानिव अननुभूतपूर्वानिव स्थितान् तं भरद्वाजं दर्शयामास । 'अभिभवादिदृशोरात्मनेपद उपसंख्यानम्' इति वचनाद्व्यत्ययेन भरद्वाजस्य कर्मत्वम् । अथेन्द्रस्तेषां वेदराशीनामेकदेशमेकैकस्माद्गिरेः मुष्टि-

द्वाजेत्यामन्त्र्य । वेदा वा एते । अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथ त इतरदननूक्तमेव । एहीमं विद्धि । अयं वै सर्वविद्येति ॥ ४६ ॥ तस्मै हैतमग्निꣳ सावित्रमुवाच । तꣳ स विदित्वा । अमृतो भूत्वा । स्वर्गं लोकमियाय । आदित्यस्य सायुज्यम् । [6]अमृतो हैव भूत्वा । स्वर्गं लोकमेति । आदित्यस्य सायुज्यम् । य एवं वेद । एषो एव त्रयी विद्या ॥ ४७ ॥ यावन्तꣳ ह

---

ना मुष्टिमात्रया आददे । आदाय च भरद्वाजेति भरद्वाजमवधानार्थमामन्त्र्य इन्द्र उवाच—एते गिरिस्थानीया वेदराशयः। अनन्ताः खलु वेदाः, एतत्खलु मुष्टित्रयमात्रमेव एतैस्त्रिभिरायुर्भिः अन्ववोचथाः गुरूपदेशमनु अधीतवानसि । अथ अनन्तरं तव इतरत् वेदजातं अननूक्तं अनधीतमेव । तस्मात्सर्वान् वेदान् कोऽध्येष्यते? एहि साधो! इमं सावित्रं विद्धि, अयं हि सावित्रः सर्वविद्या सर्ववेदविद्याध्ययनपुण्यफलावाप्तिहेतुः, तस्मात्तत्किं वृथाश्रमेण? इदमेव वेदितव्यमित्युक्त्वा तस्मै भरद्वाजाय सावित्रमुवाच । तमित्यादि गतम् ॥

[6]अमृतो हैवेत्यादि विदुषस्स्तुतिः ॥ एषो एवेत्यादि । एष सावित्र एव त्रयी विद्या, त्रयीसाध्यफलसिद्धिहेतुत्वात् । तदेवाह—यावन्तमित्यादि । गतम् ॥

वै त्रय्या विद्यया लोकं जयति । तावन्तं लोकं जयति । य एवं वेद । [7]अग्नेर्वा एतानि नामधेयानि । अग्नेरेव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । वायोर्वा एतानि नामधेयानि । वायोरेव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । इन्द्रस्य वा एतानि नामधेयानि ॥ ४८ ॥ इन्द्रस्यैव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । बृहस्पतेर्वा एतानि नामधेयानि । बृहस्पतेरेव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । प्रजापतेर्वा एतानि नामधेयानि । प्रजापतेरेव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । ब्रह्मणो वा एतानि नामधेयानि । ब्रह्मण एव सायुज्यꣴ सलोकतामाप्नोति । य एवं वेद । [8]स वा एषोऽग्नि-

---

[7]अग्नेर्वा इत्यादिना अस्य सर्वफलहेतुत्वं समर्थयते ॥ एतानि संज्ञानमित्यादीनि ब्रह्मणो नामधेयानि, तस्मादग्न्यादीनामपि नामानि नमनानि वशीकरणानि, तस्मादेवंवेदिताऽप्यग्न्यादिसायुज्यमाप्नोति समानलोकतां चाप्नोति किं पुनर्विदित्वा कर्तेति भावः ॥

[8]स वा एष इत्यादि ॥ एष सावित्रः परिमण्डल अपक्षपुच्छः पक्षपुच्छरहितः । तथाऽपि वायुरेवास्यमात्मा वायुरिव

रेपक्षपुच्छो वायुरेव । तस्याग्निर्मुखम् । असावा-
दित्यश्शिरः । स यदेते देवते अन्तरेण । तथ्सर्व-
ँ सीव्यति । तस्माथ्सावित्रः ॥ ४१ ॥

अयमहमस्मीति वेद होवाच सर्वविद्येति वि-
द्येन्द्रस्य वा एतानि नामधेयानि ब्रह्मण एव सा-
युज्यँ सलोकतामाप्नोति सप्त च ॥ ११ ॥

अग्नेर्वायोरिन्द्रस्य बृहस्पतेः प्रजापतेर्ब्रह्मणस्स
वै सप्त ॥

संज्ञानं भूस्त्वमेव संवथ्सरोसि भू राड्यसंवे
विपश्चिते प्रजापतिर्देवानियं वाव सरघा कश्चिद्वै-
कादश ॥ ११ ॥ संज्ञानँ राज्ञी मूर्धा हृदय एष
संवथ्सरो नार्धमासेषु नवचत्वारिꣳशत् ॥ ४१ ॥

हरिः ओम् । समाप्तः प्रपाठकः.

---

शीघ्रगो वा तस्याग्निरेव मुखं, असावादित्य एव शिरः । अथ एते देवते अग्न्यादित्यावन्तरेणं एतत्प्रधानयोर्द्यावापृथिव्योर्मध्ये यावत्किञ्चित्पदार्थजातं वर्तते तत्सर्वं सीव्यति अन्तरनुप्रविश्य धारयति तस्मात्सावित्र उच्यते । सीव्यतेर्वर्णव्यत्ययः ॥

इति प्रथमे काठके षड्विंशोऽनुवाकः.

समाप्तश्च प्रपाठकः.

हरिः ओम् ॥ [1]लोकोऽसि स्वर्गोऽसि । अनन्तोऽस्यपारोऽसि । अक्षितोऽस्यक्षय्योऽसि । तपसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं

[1]अथ नाचिकेतकाण्डे हव्यवाट् ऋषिः, एकविंशतिं हिरण्येष्टकाश्शर्करा वाऽभ्यक्ता नाभ्यामेवोपदधाति 'लोकोसि स्वर्गोसि' इत्यनुवाकेन प्रतिमन्त्रम् । तत्र 'पाङ्क्तमेव चिन्वीत' इत्यादयो विकारा ब्राह्मणोक्तास्तत्रैव द्रष्टव्याः । समस्तोऽनुवाको यजूंषि। तत्र सर्वात्मत्वेनेष्टका स्तूयते—लोकोसि भोगस्थानं त्वमसि। लोको विशेष्यते—स्वर्गः सुखैकान्तो लोकोसि। अनन्तः अविनाशो लोकोसि । अपारः अनवधिकभोगः । अक्षितः केनचिदप्यखण्डितः। अक्षय्यः क्षेतुमशक्यः । 'क्षय्यजय्यौ शक्यार्थे' इति निपात्यते। 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम्। तपसः प्रतिष्ठा आधारस्त्वमसि । सति लोके तपस्तप्यते । इदं विश्वं जगत् त्वयि अन्तर्गतं स्थितं त्वय्येव, न त्वदन्यत्र गच्छति यागसाधनत्वेन वृष्ट्यादिहेतुत्वात्। विश्वं यक्षं पूज्यम्। 'यक्ष पूजायाम्' यजतेर्वा औणादिकस्सप्रत्ययः । विश्वं च भूतं संपन्नसस्यादिकं, सुभूतं सुष्ठु संपन्नं परिनिष्ठितं त्वयैव संपाद्यते, त्वयैव संपन्नं च क्रियते । तस्मात्त्वं विश्वस्य वस्तुनः भर्ता जनयिता च । तं तादृशं त्वां कामदुघं अभिमतानां दातारम्। 'दुहः कप् घश्च' इति कप् । अक्षितं अचलं अक्षयफलं

त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १ ॥ [2]तपोऽसि लोके श्रितम् । तेजसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ २ ॥ [3]तेजोऽसि तपसि श्रितम् । समुद्रस्य प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रु-

ईदृशं लोकमेव त्वदुपधानेनोपदधामि । हे इष्टके! तादृशलोकात्मिकां त्वां प्रजापतिस्सादयतु । त्वं च तया देवतया अङ्गिरसामिव ध्रुवा निश्चला सीद । एवमुपधानान्तं लोकविषयं योज्यम् । शिष्टमिष्टकाविषयम् । एवं सर्वत्र ॥

[2]तपः लोकाधारं तत्र निष्पाद्यत्वात् । तपः तेजसः प्रतिष्ठा, तपसि हि तेजः प्रतितिष्ठति तत्कारणत्वात् । गतमन्यत् ॥

[3]समुद्रस्य समुद्रवणशीलस्य[1] मण्डलस्य प्रतिष्ठा तेजः रश्मयः ॥

[1] समुद्रवदाचरणशीलस्य पा.

वा सीद ॥ ३ ॥ [4]समुद्रोऽसि तेजोसि श्रितः । अपां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ४ ॥ [5]आपस्स्थ समुद्रे श्रिताः । पृथिव्याः प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्र्यो विश्वस्य जनयित्र्यः । ता व उपदधे कामदुघा अक्षिताः । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ५ ॥ [6]पृथिव्यस्यप्सु श्रिता । अग्नेः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री । तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ६ ॥ [7]अ-

[4]समुद्रो मण्डलं अपां प्रतिष्ठा, तत्कारणत्वात् ॥
[5]आपः पृथिव्याः प्रतिष्ठा, अद्भ्यः पृथिवीति ॥
[6]पृथिव्यग्नेः प्रतिष्ठा, तद्विषयत्वात् ॥
[7]अग्निरन्तरिक्षस्य प्रतिष्ठा, तस्योपरि स्थितत्वात् ॥

ग्निरसि पृथिव्याः श्रितः । अन्तरिक्षस्य प्रतिष्ठ
त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सु
तम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्व
पदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु
तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ७ ॥ [8]अन्त
क्षमस्यग्नौ श्रितम् । वायोः प्रतिष्ठा । त्वयीदमन्त
विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्व
भर्तृ विश्वस्य जनयितृ । तत्त्वोपदधे कामदुघ
क्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतय
ङ्गिरस्वद्ध्रुवा सीद ॥ ८ ॥ [9]वायुरस्यन्तरिक्षे श्रित
दिवः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं वि
भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य
नयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजा
तिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा स
द ॥ ९ ॥ [10]द्यौरसि वायौ श्रिता । आदित्यस्य

[8]अन्तरिक्षं वायोः प्रतिष्ठा, तद्विषयत्वात् ॥
[9]वायुर्दिवः प्रतिष्ठा, तस्योपरि स्थितत्वात् ॥
[10]द्यौरादित्यस्य प्रतिष्ठा, तद्विषयत्वात् ॥

तिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री। तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥१०॥ [11]आदित्योऽसि दिवि श्रितः । चन्द्रमसः प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ११ ॥ [12]चन्द्रमा अस्यादित्ये श्रितः । नक्षत्राणां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १२ ॥ [13]नक्षत्राणि स्थ चन्द्रमसि श्रितानि । संवथ्सरस्य प्रतिष्ठा युष्मा-

[11]आदित्यश्चन्द्रमसः प्रतिष्ठा, तदीयरश्म्यधीनप्रकाशत्वात् ॥

[12]चन्द्रमा नक्षत्राणां प्रतिष्ठा, तद्योगेन कालावच्छेदकत्वान्नक्षत्राणाम् ॥

[13]नक्षत्राणि संवत्सरस्य प्रतिष्ठा, तैरारब्धत्वात् ॥

सु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तृणि विश्वस्य जनयितृणि । तानि व उपदधे कामदुघान्यक्षितानि । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद॥ १३॥ [14]संवथ्सरोसि नक्षत्रेषु श्रितः । ऋतूनां प्रतिष्ठा । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता। तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥१४॥ [15]ऋतवस्स्थ संवथ्सरे श्रिताः। मासानां प्रतिष्ठा युष्मासु। इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः। तान् व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १५॥ [16]मासास्स्थर्तुषु श्रिताः । अर्धमासानां प्रतिष्ठा यु-

---

[14]संवत्सर ऋतूनां प्रतिष्ठा, तदवयवत्वात् ॥

[15]ऋतवो मासानां प्रतिष्ठा, तदवयवत्वात् ॥

[16]मासा अर्धमासानाम् ॥

ष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान् व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १६ ॥ [17]अर्धमासास्स्थ मासु श्रिताः । अहोरात्रयोः प्रतिष्ठा युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्तारो विश्वस्य जनयितारः । तान् व उपदधे कामदुघानक्षितान् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १७ ॥ [18]अहोरात्रे स्थोऽर्धमासेषु श्रिते । भूतस्य प्रतिष्ठे भव्यस्य प्रतिष्ठे । युवयोरिदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्र्यौ विश्वस्य जनयित्र्यौ । ते वामुपदधे कामदुघे अक्षिते । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ १८ ॥

[17]अर्धमासा अहोरात्रयोः ॥

[18]अहोरात्रे भूतभव्ययोः उत्पन्नोत्पत्स्यमानयोः प्रतिष्ठे ॥

[19]पौर्णमास्यष्टकाऽमावास्या । अन्नादास्स्थान्नदुघो युष्मासु । इदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्यो विश्वस्य जनयित्र्यः । ता व उपदधे कामदुघा अक्षिताः । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥१९॥

[20]राडसि बृहती श्रीरसीन्द्रपत्नी धर्मपत्नी । विश्वं भूतमनु प्रभूता । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्त्री विश्वस्य जनयित्री । तां त्वोपदधे कामदुघामक्षिताम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा

---

[19]अहोरात्रविशेषाः पौर्णमास्यादयः । अन्नदुघ इति क्विप् । छान्दसं घत्वम् । पित्रादिभ्योऽन्नमेता ददति, ते चान्नमेतासु अदन्ति, तस्मादन्नादनसामर्थ्यवत्य एता दुहते चान्नं पित्रादिभ्यः॥

[20]राट् दीप्तिः, बृहती महती बुद्धिरुच्यते । श्रीः श्रयणीया, इन्द्रस्य पालयित्री, धर्मस्य च पालयित्री । 'विभाषा सपूर्वस्य' इति ङीन्नकारौ । 'पत्यावैश्वर्ये' इति पूर्वपदप्रकृतिस्वरत्वम् । विश्वमपि भूतजातं अनु प्रभूता, यद्यद्भवति तत्र तत्र स्वयमेव भवति प्रकर्षेण तत्तद्भावयतीति तस्यात्माधीनात्मलाभत्वात् प्रभूतत्वं बुद्धेः ॥

सीद ॥ २० ॥ [21]ओजोऽसि सहोऽसि । बलमसि भ्राजोऽसि । देवानां धामामृतम् । अमर्त्यस्तपोजाः । त्वयीदमन्तः । विश्वं यक्षं विश्वं भूतं विश्वꣳ सुभूतम् । विश्वस्य भर्ता विश्वस्य जनयिता । तं त्वोपदधे कामदुघमक्षितम् । प्रजापतिस्त्वा सादयतु । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ २१ ॥

लोकस्तपस्तेजस्समुद्र आपः पृथिव्यग्निरन्तरिक्षं वायुर्द्यौरादित्यश्चन्द्रमा नक्षत्राणि संवथ्सर ऋतवो मासा अर्धमासा अहोरात्रे पौर्णमासी राऽस्योजोऽस्येकविꣳशतिः ॥ १ ॥

लोकोऽसि भर्ता तम् । तपस्तेजोऽसि भर्तृ तत् । समुद्रोऽसि भर्ता तम् । आपस्स्थ भर्त्र्यस्ता वः । पृथिवी भर्त्री ताम् । अग्निरसि भर्ता तम् । अन्तरिक्षं भर्तृ तत् । वायुरसि भर्ता तम् । द्यौरसि भर्त्री ताम् । आदित्यश्चन्द्रमा भर्ता तम् । नक्षत्राणि स्थ भर्तृणि तानि वः । संवथ्सरोऽसि भर्ता

[21]ओजआदिनानाधर्मत्वेनेष्टका स्तूयते—ओजः तेजः तद्धेतुत्वात्तच्छब्द्यम् । सहः अभिभवितृत्वं शत्रूणाम् । बलं शक्तिः,

तम् । ऋतवो मासा अर्धमासा भर्तारस्तान् वः । अहोरात्रे भर्त्र्यौ ते वाम् । पौर्णमासी भर्त्र्यस्ता वः । राडसि भर्त्री ताम् । ओजोऽसि भर्ता तमेकविꣳशतिः ॥

[1]त्वमग्ने रुद्रो असुरो महो दिवः । त्वꣳ शर्धो मारुतं पृक्ष ईशिषे । त्वं वातैररुणैर्यासि शंगयः । त्वं पूषा विधतः पासि नु त्मना । देवा देवेषु श्रयध्वम् । प्रथमा द्वितीयेषु श्रयध्वम् । द्वितीयास्तृतीयेषु श्रयध्वम् । तृतीयाश्चतुर्थेषु श्रयध्वम् । चतुर्थाः पञ्चमेषु श्रयध्वम् । पञ्चमाष्षष्ठेषु श्रयध्वम् ॥

भ्राजो यशः, देवानां धाम धारकं स्थानं वा तेजोसि अमृतं अमरणहेतुः, अमर्त्यः अमरः अनश्वरः, तपोजाः तपोभिनिष्पाद्यः । 'जनसनखन' इति विट् । 'विड्वनोः' इत्यात्वम् ॥

इति द्वितीये काठके प्रथमोऽनुवाकः.

---

[1] अध्वराहुत्यनन्तरं चतुर्भिरनुवाकैश्चतस्र आहुतीर्जुहोति 'त्वमग्ने रुद्रः' इत्यादिभिः ॥ स्वत एव सिद्धे एकैकाहुतिख्यापनाय चत्वारोऽनुवाकास्स्वाहाकारान्ता आम्नाताः । तत्र—त्वमग्ने रुद्र इति जगती ॥ व्याख्याता* । देवा देवेषु श्रयध्वमित्यादीनि यजूंषि ।

*सं. १-३-१४.

२२॥ षष्ठास्सप्तमेषु श्रयध्वम् । सप्तमा अष्टमेषु श्रयध्वम् । अष्टमा नवमेषु श्रयध्वम् । नवमा दशमेषु श्रयध्वम् । दशमा एकादशेषु श्रयध्वम् । एकादशा द्वादशेषु श्रयध्वम् । द्वादशास्त्रयोदशेषु श्रयध्वम् । त्रयोदशाश्चतुर्दशेषु श्रयध्वम् । चतुर्दशाः पञ्चदशेषु श्रयध्वम् । पञ्चदशाष्षोडशेषु श्रयध्वम् ॥२३॥ षोडशास्सप्तदशेषु श्रयध्वम् । सप्तदशा अष्टादशेषु श्रयध्वम् । अष्टादशा एकान्नविꣳशेषु श्रयध्वम् । एकान्नविꣳशा विꣳशेषु श्रयध्वम् । विꣳशा एकविꣳशेषु श्रयध्वम् । एकविꣳशा द्वाविꣳशेषु श्रयध्वम् । द्वाविꣳशास्त्रयोविꣳशेषु श्रयध्वम् । त्रयोविꣳशाश्चतुर्विꣳशेषु श्रयध्वम् । चतुर्विꣳशाः पञ्चविꣳशेषु श्रयध्वम् । पञ्चविꣳशाष्षड्विꣳशेषु श्रयध्वम् ॥२४॥ षड्विꣳशास्सप्तवि-

---

हे देवाः! सर्वेऽपि देवेषु श्रयध्वं प्रविशत, सर्वेऽपि मदर्थमैकध्यं भजत, संभूय मदभिमतं साधयतेति यावत् । एवमाद्येनोक्त्वा गणशोऽप्याह—प्रथमा इति । तत्र पृथिव्यां गताः प्रथमाः, अन्तरिक्षे द्वितीयाः, दिवि तृतीयाः, एते प्रधानभूतास्त्रयो

ꣳशेषु श्रयध्वम् । सप्तविꣳशा अष्टाविꣳशेषु श्रयध्वम् । अष्टाविꣳशा एकान्न त्रिꣳशेषु श्रयध्वम् । एकान्न त्रिꣳशास्त्रिꣳशेषु श्रयध्वम् । त्रिꣳशा एकत्रिꣳशेषु श्रयध्वम् । एकत्रिꣳशा द्वात्रिꣳशेषु श्रयध्वम् । द्वात्रिꣳशास्त्रयस्त्रिꣳशेषु श्रयध्वम् । [2]देवास्त्रिरेकादशास्त्रिस्त्रयस्त्रिꣳशाः । उत्तरे भवत ।

---

गणाः । अत एवामन्त्र्योच्यन्ते । त्रिष्वपि अपदात्परत्वात् षाष्ठिकमामन्त्रिताद्युदात्तत्वम् । चतुर्थादय एषां गुणभूताः, अतो नामन्त्र्यन्ते । चतुर्थादयो भूत्वा पञ्चमादिषु श्रयध्वमिति प्रथमादय एव प्रार्थ्यन्ते । एवमात्रयस्त्रिंशद्गणाद्द्रष्टव्यम् ॥

[2]इदानीं गणभेदं दर्शयति—देवा इति ॥ हे देवाः! हे त्रिरेकादशाः! हे त्रिस्त्रयस्त्रिंशाः! । त्रिरेकादश त्रयस्त्रिंशत् तासां पूरणास्त्रिरेकादशाः । एवं त्रिस्त्रयस्त्रिंशत् एकोनशतं, तस्य पूरणास्त्रिस्त्रयस्त्रिंशाः । तत्र च प्रथमस्यापदात्परत्वान्निघाताभावः । 'विभाषितं विशेषवचने बहुवचनम्' इति प्रथमस्याविद्यमानत्वनिषेधाद्द्वितीयं निहन्यत एव । तस्य सामान्यवचनत्वेनाविद्यमानत्वनिषेधाभावान्निघाताभावे आद्युदात्तत्वमेव । अथ हे उत्तरे देवाः! यावदेकोनचत्वारिंशदधिकशतत्रयसहितानि त्रीणि सहस्राणि भवन्ति सर्वे उत्तरवर्त्मानः उत्तरैस्समानवर्त्मानः, उत्तरसत्त्वानः उत्तरैस्स-

उत्तरवर्त्मान उत्तरसत्वानः। यत्काम इदं जुहोमि। तन्मे समृध्यताम् । वयꣳ स्याम पतयो रयीणाम् । भूर्भुवस्स्वस्स्वाहा ॥२५॥

षष्टेषु श्रयध्वꣳ षोडशेषु श्रयध्वꣳ षड्विꣳशेषु श्रयध्वमुत्तरसत्वानश्चत्वारि च ॥ २ ॥

---

मानप्राधान्याश्च भवत उत्तरोत्तरगणैरेकीभूता इत्यर्थः । तत्रायं गणानां क्रमः—एको देवस्त्रिभिरेकादशाभिर्गुणितस्त्रयस्त्रिंशद्देवाः, ऐवं त्रिभिर्गुणिता एकोनशतम् । तदिदमुक्तं 'त्रिरेकादशास्त्रिस्त्रयस्त्रिंशाः' इति । पुनरप्येकोनशतसंख्या देवास्त्रिभिरेकादशाभिर्गुणिता उत्तरे इत्युच्यन्ते । ते च सप्तषष्ट्यधिकशतद्वयसहितानि त्रीणि सहस्राणि । अथ प्रथमस्यावान्तरगणस्याधिपतयस्त्रयस्त्रिंशत, उत्तरस्य च त्रयस्त्रिंशत्, अथ प्रथमस्य प्रधानगणस्य त्रयः, उत्तरस्य च त्रयः, एवं सर्वे संभूय एकोनचत्वारिंशदधिकशतत्रयसहितानि त्रीणि सहस्राणि देवा भवन्ति । अथैवंभवद्भिरत्रभवद्भिरित्थं कर्तव्यमित्याह—यत्कामः अहं इदं जुहोमि तन्मे युष्मत्प्रसादात् समृद्ध्यतां, वयं रयीणां धनानां च पतयस्स्याम। भूरादिवासिभ्यस्सर्वेभ्योऽपि युष्मभ्यं स्वाहुतमिदं करोमि ॥

इति द्वितीये काठके द्वितीयोऽनुवाकः.

---

[1]अग्नाविष्णू सजोषसा । इमा वर्धन्तु वां गिरः । द्युम्नैर्वाजेभिरागतम् । राज्ञी विराज्ञी । सम्राज्ञी स्वराज्ञी । अर्चिश्शोचिः । तपो हरो भाः । अग्निस्सोमो बृहस्पतिः । विश्वे देवा भुवनस्य गोपाः । ते सर्वे संगत्य । इदं मे प्रावता वचः । वयꣳ स्याम पतयो रयीणाम् । भूर्भुवस्स्वस्स्वाहा ॥

संगत्य त्रीणि च ॥ ३ ॥

[1]अन्नपतेऽन्नस्य नो देहि । अनमीवस्य शुष्मिणः । प्रप्रदातारं तारिषः । ऊर्जं नो धेहि द्विपदे

---

[1] अग्नाविष्णू इति गायत्री ॥ व्याख्याता* । राज्ञीत्याष्टिर्नवपदा यजुरन्ता । राज्ञ्यादयो व्याख्याताः प्रथमे काठके† । अत्र इन्द्रस्थाने सोमः । ते सर्व इत्यादि । अनुक्रान्तास्सर्वेऽपि यूयं संगत्य मे मदीयमिदं प्रार्थनारूपं वचः प्रावत प्रयोजनसंपादनेन रक्षत । वयं स्यामेत्यादि । गतम्‡ ॥

इति द्वितीये काठके तृतीयोऽनुवाकः.

---

[1] अन्नपत इत्युपरिष्टाद्बृहती ॥ व्याख्याता§ । अग्ने पृथवी पत इत्यादि । निगदसिद्धम् । सर्वत्र 'नामन्त्रिते समानाधि-

---

* सं. ४-७ १. † ब्रा. ३-१०-६. ‡ ब्रा. ३-११-२. § सं. ४-२-३.

चतुष्पदे । अग्ने पृथिवीपते । सोम वीरुधां पते । त्वष्टस्समिधां पते । विष्णवाशानां पते । मित्र सत्यानां पते । वरुण धर्मणां पते ॥२७॥ मरुतो गणानां पतयः । रुद्र पशूनां पते । इन्द्रौजसां पते । बृहस्पते ब्रह्मणस्पते । [2]आ रुचा रोचेऽहꣳ स्वयम् । रुचा रुरुचे रोचमानः । अतीत्यादस्स्वराभरेह । तस्मिन् योनौ प्रजनौ प्रजायेय । वयꣳ स्याम पतयो रयीणाम् । भूर्भुवस्स्वस्स्वाहा ॥२८

वरुण धर्मणां पते स्वस्स्वाहा ॥४॥

करणे' इत्यविद्यमानत्वनिषेधः । पूर्वस्य तु 'नामन्त्रिते' इति षष्ठ्यन्तानां परामन्त्रितानुप्रवेशः ॥

[2]आ रुचेति पञ्चपदा त्रिष्टुब्जगती वा ॥ रुचा दीप्त्या अहं आरोचे सर्वतो दीप्ये, किञ्चाहं स्वयमेव रुचा रोचमानः निरपेक्षदीप्तिः रुरुचे रोचै, तदर्थमतीत्य अतिक्रम्य अदः अन्तरिक्षं यत् स्थितं स्वः तादिहाभर आहर इह अस्मिन् कर्मणि फलत्वेनानय, यतोऽहं तस्मिन् योनौ सर्वार्थकारणे प्रजनौ प्रजननाधारे अहं प्रजायेय प्रजावान् स्याम् । जनेरौणादिक इप्रत्ययः । वयं स्यामेति । व्याख्यातम्* ॥

इति द्वितीये काठके चतुर्थोऽनुवाकः.

*ब्रा. ३-११-२.

[1]सप्त ते अग्ने समिधस्सप्त जिह्वाः । सप्तर्षय-स्सप्तधाम प्रियाणि । सप्त होत्रा अनु विद्वान् । सप्त योनीरा पृणस्वा घृतेन । प्राची दिक् । अग्निर्देवता । अग्निꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । दक्षिणा दिक् । इन्द्रो देवता ॥ २१ ॥ इन्द्रꣳ स दिशां देवं देवता-नामृच्छतु । यो मैतस्यै दिशोऽभिदासति । प्रतीची दिक् । सोमो देवता । सोमꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासति । उदीची दिक् । मित्रावरुणौ देवता । मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु । यो मैतस्यै दि-

[1] सप्त त इति मध्येज्योतिस्त्रिष्टुप् ॥ 'भूमिर्भूम्ना'* इत्यत्र व्याख्याता । सप्त होत्रा अनु विद्वानिति विशेषः,—अनुक्रमेण विद्वान् । शेषं यजुः । वयं स्यामेत्येकपदा त्रिष्टुप् । या प्राची दिक् तस्या अग्निर्देवता । अथ दिशां या देवताः तासां मध्ये अग्निं देवं प्राच्या देवतां स ऋच्छतु प्राप्य प्रलीयतां तत्रैव क्षीयताम् । कः? यो जनः एतस्यै दिशस्संबन्धी मामभिदासति उपक्षपयति । 'दसु उपक्षये' छान्दस-

* सं. १-५-३.

शोऽभिदासंति ॥३०॥ ऊर्ध्वा दिक् । बृहस्पतिर्दे- वता । बृहस्पतिꣳ स दिशां देवं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासंति । इयं दिक् । अदिति- र्देवता । अदितिꣳ स दिशां देवीं देवतानामृच्छतु । यो मैतस्यै दिशोऽभिदासंति । पुरुषो दिक् । पुरु- षो मे कामान्त्समर्धयतु ॥३१॥ अन्धो जागृविः प्राण । असावेहि । बधिर आक्रन्दयितरपान । अ सावेहि । उषसंमुषसमशीय । अहमसो ज्योतिर-

मात्वम् । एतेनोत्तरे व्याख्याताः । दिशामिति 'सावेकाचः' इति षष्ठ्या उदात्तत्वम् । दिशोऽभिदासतीत्यत्र तेनैवोदात्तत्वम् । 'स्वरितो वाऽनुदात्ते पदादौ' इति स्वरितत्वम् । 'देवताद्वन्द्वे च' इति मित्रावरुणशब्दो द्व्युदात्तः । बृहस्पतिशब्दो वनस्पत्यादिः । इयं अधोदिक् । पुरुषस्सर्वस्यापि दिक्, व्यापित्वात् तादृशः पुरुषो मे कामान् समर्धयतु । अन्धो जागृविरित्यादि । व्याख्यातं प्रथमे काठके* । उषसमुषसं इति तृतीयः पर्यायः, सर्वामुषसं अशीय व्याप्नुयाम् । अश्नोतेश्छान्दसश्शपो लुक् । असावेहीति प्राणापानावुच्येते, युवयोः प्रसादात् उषसं सर्वामश्नुवीयेति । किञ्च—हे असो प्राण! हे असो अपान! उभयार्थं असौ इत्युक्तम् । युवयोः प्रसादात् इदं ज्योतिः आदित्यमपि अशीय

* तै. ब्रा. ३-१०-८.

शीय । अहमसोऽपोंशीय । वयꣳ स्याम पतयो रयीणाम् । भूर्भुवस्स्वस्स्वाहा ॥ ३२ ॥

दक्षिणा दिगिन्द्रो देवता मित्रावरुणौ स दिशां देवौ देवतानामृच्छतु यो मैतस्यै दिशोऽभिदासत्यर्धयतु नव च ॥५॥

[1]यत्तेऽचितं यदु चितं ते अग्ने । यत्त ऊनं यदु तेऽतिरिक्तम् । आदित्यास्तदङ्गिरसश्चिन्वन्तु । विश्वे ते देवाश्चितिमापूरयन्तु । [2]चितश्चासि संचित-

आप्नुयाम्, तथा हे असो अपः कर्माणि युवयोः बलेन अशीय कर्ता स्यां कर्मणाम् । वर्णव्यत्ययेन औकारस्य ओकारः । वयं स्यामेत्यादि । गतम् ॥

इति पञ्चमोऽनुवाकः.

---

[1] यत्तेऽचितमित्युपस्थानम् ॥ त्रिष्टुबियम्, व्याख्यातप्राया 'त्वमेव त्वां वेत्थ'* इत्यत्र । विशेषस्तु—हे अग्ने! यत्तव संबन्धि अचितं यच्चापि चितम् । यत्त ऊनमित्यादि समानम् ॥

[2] चितश्चेति द्विपदा त्रिष्टुप् ॥ तत्रैव व्याख्याता* ॥

---

*तै. ब्रा. ३-१०-३.

श्चास्यग्ने । एतावाꣳश्चासि भूयाꣳश्चास्यग्ने । [3]लोकं पृणच्छिद्रं पृण । अथो सीद शिवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिः । अस्मिन् योनावसीषदन् ॥ ३३ ॥ तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । [4]ता अस्य सूददोहसः । सोमꣳ श्रीणन्ति पृश्नयः । जन्मन्देवानां विशः । त्रिष्वारोचने दिवः । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । [5]अग्ने देवाꣳ इहावह । ज-

---

[3] लोकंपृणा उपदधाति—लोकं पृणेति ॥ अनुष्टुबियं यजुरन्ता व्याख्याता 'अपेत वीत' इत्यत्र * ॥

[4] ता अस्येति † ॥ दिवो रोचने स्वर्गस्य प्रकाशके अस्य जन्मन् यजमानस्य जन्मनि निमित्तभूते सति देवानां संबन्धिन्यो विशः प्रजारूपाः पृश्नयः अल्पगोसदृशाः सूददोहसः अन्नस्य दोहयित्र्यः ता इष्टकाः सोमं श्रीणन्ति पक्कं कुर्वन्ति । कदा ? त्रिषु सवनेषु । आ समन्तात् यानि प्रातस्सवनादीनि तेषु निरन्तरं सोमपाके हेतव एता इष्टका इत्यर्थः । एता इष्टकाः यद्देवतासम्बन्धिन्यः, तया देवतयेत्यादि पूर्ववत् ॥

[5] अग्न इति ॥ हे अग्ने! इह अस्मिन् कर्मणि देवानावह आह्वय । जज्ञानः कर्तव्यज्ञः । वृक्तबर्हिषे आवर्तितयज्ञाय यजमानाय । यद्वा—जज्ञानो जातोसि यजमानार्थम् । लिटः

---

* तै. सं. ४-२-४. † माधवीयमेतन्मन्त्रभाष्यम्.

ज्ञानो वृक्तबंर्हिषे। असि होता न ईड्यः। [6]अगंन्म महा मनंसा यविंष्ठम् ॥ ३४ ॥ यो दीदाय समिंद्धस्स्वे दुरोणे। चित्रभांनू रोदंसी अन्तरुर्वी। स्वांहुतं विश्वतः प्रत्यञ्चम्। [7]मेधाकारं विदथंस्य प्रसाधनम्। अग्निꣳ होतारं परिभूतमं मतिम्।

---

कानच्। नः खल्वस्माकं ईड्यः स्तुत्यो होता आह्वाताऽसि देवानां, तस्मात्त्वामेव ब्रूमो देवानावहेति। 'ईडवन्द' इत्याद्युदात्तत्वम् ॥

[6]अगन्मेति त्रिष्टुप् ॥ अग्निं वयं अगन्म शरणं गताः। 'मन्त्रे घस' इति च्लेर्लुक्। मनसा भक्त्या। महान्तं, 'सुपां सुलुक्' इति डादेशः। यविष्ठं युवतमं हविर्भिर्मिश्रयितारं वा, देवैः स्वाहुतं सुष्ठु हविषामाहुतिभिराराधितं, विश्वतः सर्वतोपि प्रत्यञ्चं अस्मदाभिमुख्येनागच्छन्तं स्वाहुतत्वेनानुकूलं ईदृशं तं अगन्मेति। पुनश्च विशेष्यते—यो दीदाय दीप्यते स्वे दुरोणे आत्मीये गृहे, रोदसी द्यावापृथिव्यौ उर्वी उर्व्यौ। 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्। अन्तः मध्ये। व्यत्ययेन द्वितीया 'सुपां सुलुक्' इति वा षष्ठ्या लुक्। चित्रभानुः चायनीयदीप्तिः ॥

[7]मेधाकारमिति जगती ॥ हे अग्ने! त्वां मेधाकारं बुद्धिस्थितानां कर्तारं संपादयितारं, विदथस्य यज्ञस्य प्रसाधनं प्रकृष्टं साधनं, अग्निं अङ्गनादिगुणं होतारं आह्वातारं, परिभूतमं सर्वतो भावयितृतमं कर्मणाम्। 'बहुलमन्यत्रापि' इति णि-

त्वाम॑र्भस्य ह॒विष॑स्स॒मानमित् । त्वां म॒हो वृ॑णते॒ नरो॒ नान्यं त्वत् । [8]म॒नु॒ष्वत्त्वा॒ निधी॑महि । म॒नु॒ष्वत्समि॑धीमहि । अग्ने॑ मनु॒ष्वद॑ङ्गिरः ॥ ३५ ॥ दे॒वान्दे॑वाय॒ते यज । [9]अ॒ग्निर्हि वा॒जिनं॑ वि॒शे ।

लुक् । परिभावयितृतमं वा शत्रूणाम् । मर्तिं मतिमन्तं मननीयं वा । यथोक्तगुणशालिनाऽपि दुराराधेन कोऽर्थ इत्याह—अर्भस्य अल्पस्य महः महतश्च हविषः समानमित् समानमेव समानतुष्टिमेव महता तुल्यमल्पमपि गृह्णानमीदृशं त्वामेव नरः मनुष्याः वृणते भजन्ते न तु त्वत्तोऽन्यमनीदृशमहिमानम् ॥

[8]मनुष्वत्त्वेत्यनुष्टुप् ॥ हे अग्ने! त्वां मनुष्वत् मनुष्यमिव गृहे निधीमहि स्थापयामः, मनुष्यवदेव समिधीमहि संदीपयामः अर्चयामः मनुष्ययोग्यानेवोपचारान् जानीम इति । 'तेन तुल्यं' इति वतिः, तदर्हतीति वा । यद्वा—मनुष्वत् मनुष्या इव, यथा मनुष्या गृहे बन्धुं स्थापयन्ति, यथा च पूजयन्ति तदनुरूपं वयं कुर्मः । उभयत्र छान्दसश्शपो लुक् मनोश्च षुगागमः, सकारान्तं वा शब्दान्तरम् । हे अग्ने! अङ्गिरः अङ्गनादिगुण त्वमपि मनुष्वत् मनुष्याणामिव मनुष्यार्हं वा देवान् यज, ततः परं यथा प्रसीदसि तथा यजामह इति भावः । देवायते देवान् यष्टुमिच्छते यजमानाय । 'देवसुम्नयोर्यजुषि काठके' इति दीर्घत्वम् ॥

[9]अग्निर्हीति पञ्चपदा पङ्क्तिः ॥ अग्निः खलु वाजिनं अन्नं

ददाति विश्वचर्षणिः । अग्नी राये स्वाभुवम् । स प्रीतो याति वार्यम् । इषꣳ स्तोतृभ्य आभर । [10]पृष्टो दिवि पृष्टो अग्निः पृथिव्याम् । पृष्टो विश्वा ओषधीराविवेश । वैश्वानरस्सहसा पृष्टो अग्निः । स नो दिवा स रिषः पातु नक्तम् ॥ ३६ ॥

असीषदन् यविष्ठमङ्गिरो नक्तम् ॥ ६ ॥

[1]अयं वाव यःपवते । सोऽग्निर्नाचिकेतः । स यत्प्राङ्पवते । तदस्य शिरः । अथ यद्दक्षिणा । स

---

विशे मनुष्येभ्यो ददाति । विश्वचर्षणिः विश्वं चर्षणीयं ज्ञातव्यं यस्य तादृशस्स खल्वग्निरेव यजमानस्य राये धनाय स्वाभुवं आत्मनो भवनं उत्पत्तिं वार्यं वरणीयं प्रीतो याति प्राप्नोति स्तुत्या तृप्तस्तादृग्रूपं परिगृह्णाति । तादृक्कारी खल्वग्निर्नाम, तस्मात्स त्वं प्रतिपादितोऽग्निः स्तोतृभ्यः यजमानेभ्यः इषं अन्नं आभर आहर । 'हृग्रहोर्भश्छन्दसि' इति भत्वम् ॥

[10]पुरीषमुपदधाति—पृष्टो दिवीति त्रिष्टुप् ॥ व्याख्याता 'वैश्वानरो नः'* इत्यत्र ॥

इति षष्ठोऽनुवाकः.

---

[1]अथ नाचिकेतं ब्राह्मणं त्रयोऽनुवाकाः—अयं वावेत्यादि ॥ वायुत्वेन नाचिकेतस्स्तूयते । योऽयं पवते पवमानो वायुर्वि-

---

*तै. सं. १-५-११.

दक्षिणः पक्षः । अथ यत्प्रत्यक् । तत्पुच्छम् । यदुदङ् । स उत्तरः पक्षः ॥३७॥ अथ यथ्संवाति । तदस्य समञ्चनं च प्रसारणं च । अथो सम्पदेवास्य सा । [2]सꣳ ह वा अस्मै सकामः पद्यते । यत्कामो यजते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । यो ह वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठां वेद । आयतनवान्भवति । गच्छति प्रतिष्ठाम् ॥३८॥ हिरण्यं वा अग्नेर्नाचिकेतस्यायतनं प्रतिष्ठा । य एवं वेद । आयतनवान्भवति । ग-

---

श्वस्य पावयिता शोधयिता स एव नाचिकेतोऽग्निः विश्वस्थितिहेतुत्वात् । तस्य प्राक्पवनादीनि शिरःप्रभृतिस्थानीयानि । संवानं संगतं वानं, समं वानं वा दिगन्तरविशिष्टं, तदस्याग्नेश्शरीरस्य समञ्चनं संकोचः प्रसारणं विस्तारश्च । शरीरगता या चेष्टा अवयवसंकोचविस्तारात्मिका तत्स्थानीयं संवानमिति । अपिचास्याग्निशरीरस्य सा संपत् वृद्धिः जीवनवत्त्वं यदन्तर्वानं, यद्वा—अस्य अग्नेः सा संपत् माहात्म्यं यत्पवमानवत्सर्वगामित्वम् ॥

[2]सं ह वा इत्यादिर्येष्टुर्विदुषश्च प्रशंसा ॥ यं कामयत इति यत्कामः । 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च। यो ह वा इत्यादि । आयतनं स्थानं प्रतिष्ठा स्थितिहेतुः

च्छंति प्रतिष्ठाम् । यो ह वा अग्नेर्नाचिकेतस्य शरीरं वेद । सशरीर एव स्वर्गं लोकमेति । हिरण्यं वा अग्नेर्नाचिकेतस्य शरीरम् । य एवं वेद । सशरीर एव स्वर्गं लोकमेति । [3]अथो यथा रुक्म उत्तप्तो भाय्यात् ॥ ३१ ॥ एवमेव स तेजसा यशसा । अस्मिꣳश्च लोकेऽमुष्मिꣳश्च भाति । [4]उरवो ह वै नामैते लोकाः । येऽवरेणादित्यम् । अथ हैते वरीयाꣳसो लोकाः । ये परेणादित्यम् ।

---

हिरण्यं तदुभयं, हिरण्येष्टकाभिरुपधानात् । विदित्वा यष्टुः प्रथमं फलं, द्वितीयं वेदितुः । हिरण्यं नाचिकेतस्य शरीरं हिरण्यात्मकत्वात्तस्य ॥

[3]अथो यथेति ॥ अपिच उत्तप्तं स्वर्णं यथा भाय्यात् भायात् । छान्दसो द्वितीययकारोपजनः, यकारान्तं वा धात्वन्तरं द्रष्टव्यं, स्वार्थिकण्यन्तो वा भातिर्द्रष्टव्यः । एवमेव स नाचिकेतयाजी तद्वेदी च तेजसा यशसा च अस्मिंश्च लोकेऽमुष्मिंश्च भाति ॥

[4]उरवो ह वा इत्यादि ॥ द्वये लोकाः उरवो महान्तश्च वरीयांस उरुतराश्च । 'प्रियस्थिर' इत्यादिना वरादेशः । तत्रादित्यस्याधस्तादुरव उपरि वरीयांसः । तत्रैष यजमानः कश्चिदन्तवन्तं क्षय्यं क्षपितुं शक्यं लोकं जयाति योऽवरेणादित्यं

अन्तवन्त२ँ ह वा एष क्षय्यं लोकं जयति । योऽवरेणादित्यम् । अथ हैषोऽनन्तमपारमक्षय्यं लोकं जयति । यः परेणादित्यम् ॥४०॥ अनन्त२ँ ह वा अपारमक्षय्यं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । [5]अथो यथा रथे तिष्ठन्पक्षसी पर्यावर्तमाने प्रत्यपेक्षते । एवमहोरात्रे प्रत्यपेक्षते । नास्याहोरात्रे लोकमाप्नुतः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ॥४१॥

उत्तरः पक्षो गच्छति प्रतिष्ठां भाय्याद्यः
परेणादित्यमष्टौ च ॥७॥

---

वर्तते, अथ कश्चिद्यजमानः अनन्तं अविनाशं अपारं अपर्यवसानभोगं अक्षय्यं क्षपयितुमशक्यं च लोकं जयति यः परेणादित्यं वर्तते । 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया । तत्र कोऽनन्तमपारमक्षय्यं लोकं जयतीति चेत्, ब्रूम इत्याह—अनन्तं हेत्यादि । नाचिकेतयाजी नाचिकेतवेदी च तादृशस्य लोकस्य जेतेति वेदितव्यमिति ॥

[5]अथो यथेति ॥ अपिच यथा रथस्योत्सङ्गे उपरि तिष्ठन् अधस्तात् पर्यावर्तमाने पक्षसी पुनःपुनः परिवर्तमाने चक्रे प्रत्यपेक्षते तद्विषयिणी अपेक्षा प्रत्यपेक्षणम् । एवमहोरात्रे आदित्यवशेनाधस्तात्प्रवर्तमाने अयं प्रत्यपेक्षते, न ह्यस्य लोकं स्थानं आदित्यादुपरि स्थितं अहोरात्रे प्राप्नुतः, तस्मात्कालतोऽनवच्छिन्नत्वादनन्तत्वमिति । योऽग्निमिति । गतम् ॥

इति द्वितीये काठके सप्तमोऽनुवाकः.

---

[1]उशन् ह वै वाजश्रवसस्सर्ववेदसं ददौ। तस्य ह नचिकेता नाम पुत्र आस। तꣳ ह कुमारꣳ सन्तम्। दक्षिणासु नीयमानासु श्रद्धा विवेश। स होवाच। तत कस्मै मां दास्यसीति। द्वितीयं तृतीयम्। तꣳ ह परीत उवाच। मृत्यवे त्वा ददामीति। तꣳ ह स्मोत्थितं वागभिवदति ॥४२॥ गौतम कुमारमिति। स होवाच। परेहि मृत्योर्गृहान्। मृत्यवे वै त्वाऽदामिति। तं वै प्रवसन्तं

---

[1]उशन्नित्यादि ॥ उशन्नाम वाजश्रवसोऽपत्यं सर्ववेदसं सर्वस्वं ददौ। सर्वं वेदो धनं सर्ववेदसम्। 'अनसन्नन्तान्नपुंसकाच्छन्दसि' इत्यच् समासान्तः। तस्य नचिकेता नाम पुत्रो बभूव। छान्दसो भूभावाभावः। न चिकेत न जज्ञौ पितुर्भावमिति नचिकेता इति केचित्। पृषोदरादिः। अथ तं पुत्रं कुमारमेव बालमेव सन्तं दक्षिणासु नीयमानासु दक्षिणानयनकाले पितुः श्रद्धा दानाभिनिवेशो विवेश प्राप, श्रद्धातिशयेन पुत्रमपि दक्षिणात्वेन देयममन्यत। अथ विदिताभिप्रायः पुत्र उवाच पितरं—हे तात! कस्मै मां दास्यसि? इति। एवं द्वितीयं तृतीयं च पुनःपुनः पप्रच्छ। अथ एवं पुत्रेण परीतः पर्याक्रान्तः पुनःपुनर्निर्बन्धितः पिता क्रुद्ध इव पुत्रमुवाच—मृत्यवे त्वा ददामीति। अथ पितृवचनानन्तरं

गन्तासीति होवाच । तस्य स्म तिस्रो रात्रीरनाश्वान्गृहे वसतात् । स यदि त्वा पृच्छेत् । कुमार कति रात्रीरवात्सीरिति । तिस्र इति प्रति ब्रूतात् । किं प्रथमाꣳ रात्रिमाश्ना इति ॥ १३ ॥ प्रजां त इति । किं द्वितीयामिति । पशूꣳस्त इति । किं तृतीयामिति । साधुकृत्यां त इति । तं वै प्रवसन्तं जगाम । तस्य ह तिस्रो रात्रीरनाश्वान्गृह उवास । तमागत्य पप्रच्छ । कुमार कति रात्रीरवात्सीरि-

मृत्युसकाशं गन्तुमुत्थितं सहसोच्चलितं पुत्रमभिलक्ष्याकाशे काचिद्वागभिवदति स्म उत्तरथौ । कीदृशी? आह—हे गौतम! किं कुमारमिति किमेवं बालं मृत्यवे ददासि? किमिदं गौतमगोत्रस्य तव युज्यते? इति दर्शयितुं गौतमग्रहणम् । अथ पितोवाच—परेहि मृत्योर्गृहान् यथाऽहं पापो न स्यां, मृत्यवे खलु त्वामदां दत्तवानहं नेदानीं दत्तं निवर्तयितुमुत्सहे न तदन्यथा भवति, तस्मात् पुत्र परेहि मृत्योर्गृहान् यास्यसीति । अथ पिता पुत्रमुवाच—तं मृत्युं प्रवसन्तं गृहे असंनिहितं गन्तासि, असन्निहिते तस्मिन् मृत्यौ तस्य गृहा गन्तव्यास्त्वयेति यावत् । इत्थं च कर्तव्यमित्याह—तस्य गृहे तिस्रो रात्रीरनाश्वान् अनश्नन्नेव वसतात् वस । अथ स आगतो यदि त्वां पृच्छेत् हे कुमार! कति रात्रीर्मम गृहे अवात्सीः उषितवानसि

ति । तिस्र इति प्रत्युवाच ॥ ४४॥ किं प्रथमाꣳ रात्रिमाश्ना इति। प्रजां त इति। किं द्वितीयामिति। पशूꣳस्त इति । किं तृतीयामिति । साधुकृत्यां त इति । [2]नमस्ते अस्तु भगव इति होवाच । वरं वृणीष्वेति । पितरमेव जीवन्नयानीति । द्वितीयं वृणीष्वेति ॥४५॥ इष्टापूर्तयोर्मे क्षितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै तस्येष्टापूर्ते नाक्षीयेते । नास्येष्टापूर्ते क्षीयेते । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद ।

---

इति, तिस्रो रात्रीरिति प्रतिब्रूतात् प्रतिब्रूहि । अथ स यदि पुनः पृच्छेत् प्रथमां रात्रिं किमाश्नाः अशितवानसि इति, तदैवं प्रतिब्रूयाः प्रजां ते आश्नामिति । अथ पुनरपि यदि पृच्छेत् द्वितीयां रात्रिं किमाश्ना इति, तदाऽपीत्थं ब्रूयाः पशूंस्ते आश्नामिति । यदि भूयोऽपि पृच्छेत् तृतीयां रात्रिं किमाश्ना इति, तदा चेत्थं प्रतिब्रूहि साधुकृत्यां सुकृतं त्वदीयमाश्नामिति । एवं पित्रोक्ते पुत्रोऽपि तथैव कृतवानित्याह—तं वा इत्यादि । गतम् । परोक्षे लिट् ॥

[2]अथ मृत्युरुवाच—हे भगवः! नमस्ते अस्तु प्रसीदेति । पुनरप्याह स्म—वरं वृणीष्वेति । अथ नचिकेता ब्रवीति स्म—पितरमहं जीवन्नेव अयानि गच्छानीति । अथ तत्तथाऽस्तु,

तृतीयं वृणीष्वेति । पुनर्मृत्योर्मेऽपजितिं ब्रूहीति होवाच । तस्मै हैतमग्निं नाचिकेतमुवाच । ततो वै सोऽपं पुनर्मृत्युमजयत् ॥४६॥ अपं पुनर्मृत्युं जयति । योऽग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेदं । [3]प्रजापतिर्वै प्रजाकामस्तपोऽतप्यत । स हिरण्यमुदास्यत् । तदग्नौ प्रास्यत् । तदस्मै नाच्छदयत् । तद्द्वितीयं प्रास्यत् । तदस्मै नैवाच्छदयत् । तत्तृतीयं प्रास्यत् ॥४७॥ तदस्मै नैवाच्छं-

---

द्वितीयमपि वृणीष्वेति तेनोक्ते नचिकेता वदति स्म—इष्टापूर्तयोः क्षितिं स्थानं मे ब्रूहीति । तत्तस्मै एतं नाचिकेतमग्निमुवाच । ततस्तस्येष्टापूर्ते नाक्षीयेताम् । छान्दसं ङेरेत्वम्। नास्येत्यादि विदुषस्स्तुतिः । ततस्तृतीयं वरं वृणीष्वेति तेनोक्तो नचिकेता ब्रूते स्म—पुनर्मृत्योरपजितिं मे ब्रूहीति । पुनः पुनर्मृतिः पुनर्मृत्युः तस्यापजयोऽमृतत्वम् । तस्मै हेत्यादि । गतम् ॥

[3]प्रजापतिर्वा इत्यादि ॥ उदास्यत् उत्क्षिप्तवान् दक्षिणां दातुं हस्ते गृहीतवान् । तदग्नौ शोभनार्थं प्रास्यत् प्रक्षिप्तवान् । तदस्मै अस्याभिप्रायानुरूपं नाच्छदयत् न द्रुतमभवत् पाषाणमिव स्थिरमभवत् । 'छद अपवारणे' चौरादिकः अदन्तो द्रष्टव्यः । अथ द्वितीयं तृतीयं च प्रास्तं नैवाच्छदयत् । अथ

दयत् । तदात्मन्नेव हृदय्येऽग्नौ वैश्वानरे प्रास्यत् । तदस्मा अच्छदयत् । तस्माद्धिरण्यं कनिष्ठं धनानाम् । भुञ्जत्प्रियतमम् । हृदयजꣳहि । स वै तन्नेव नाविन्दत् । यस्मै तां दक्षिणामनेष्यत् । ताꣳ स्वायैव हस्ताय दक्षिणायानयत् । तां प्रत्यगृह्णात् ॥ ४८ ॥ दक्षाय त्वा दक्षिणां प्रतिगृह्णामीति । सोऽदक्षत दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्र-

बाह्याग्निं हित्वा आत्मनि स्थिते हृदय्येऽग्नौ प्रास्यत् । तदस्मा अच्छदयत् हुतमभवत् । तस्मादद्यत्वेऽपि हिरण्यं कनिष्ठं दीप्ततमं धनानां मध्ये भवति, संस्कृतत्वादित्यर्थः । 'कन दीप्तौ' तृजन्तात् 'तुश्छन्दसि' इतीष्ठनि 'तुरिष्ठेमेयस्सु' इति तृलोपः । केचिदाहुः—धनानां मध्ये हिरण्यं कनिष्ठं अल्पतममपि भुञ्जत् प्रियतमं भवति हृदयजत्वादिति । अथ स प्रजापतिरन्विच्छन्नपि तादृशस्य ग्रहीतारं नाविन्दत् नालभतैव, यस्मै तां दक्षिणामनेष्यत् दक्षिणात्वेन तद्धिरण्यमदास्यत् । अथान्यमविदित्वा स्वाय आत्मीयाय दक्षिणाय हस्तायैव तां दक्षिणामनयत् स्वयमेव च तां दक्षिणां प्रत्यगृह्णात्—दक्षायेति मन्त्रेण । दक्षाय वृद्ध्यर्थं 'दक्ष वृद्धौ' त्वां दक्षिणां प्रतिगृह्णामीत्यर्थः । अथ प्रजापतिः तां दक्षिणां प्रतिगृह्य अदक्षत अवर्धत प्रजाः सृष्टवान् । तस्मादन्योऽप्येवं विद्वान् हिरण्यदक्षिणां प्रतिगृह्य दक्षते वर्धत एव ॥

तिगृह्य । य एवं वेद । [1]एतद्ध स्म वै तद्विद्वाꣳसो वाजश्रवसा गोतमाः । अप्यनूदेश्यां दक्षिणां प्रतिगृह्णन्ति । उभयेन वयं दक्षिष्यामह एव दक्षिणां प्रतिगृह्येति । तेऽदक्षन्त दक्षिणां प्रतिगृह्य । दक्षते ह वै दक्षिणां प्रतिगृह्य । य एवं वेद । प्र ह्यान्यं व्लीनाति ॥ ४१ ॥

वदत्याश्वा इत्युवाच द्वितीयं वृणीष्वेत्यजयत्तृतीयं प्रास्यदगृह्णाद्य एवं वेदैकं च ॥ ८ ॥

---

[1]एतद्ध स्मेत्यादि ॥ तदेतदेवं हिरण्यमाहात्म्यं **विद्वांसो वाजश्रवसाः** वाजश्रवसः पुत्राः, **गोतमाः** गौतमगोत्रजाः । 'अत्रिभृगुकुत्स' इति बहुषु लुक् । ते तत्रभवन्तः **अनूदेश्यां** अशुद्धामेकोद्दिष्टादिलक्षणामपि **दक्षिणां प्रतिगृह्णन्ति स्म** । देवतादिभ्यो निवेदितमनूदेश्यमिति केचित् । छान्दसमुपसर्गस्य दीर्घत्वम् । केनाभिप्रायेण ते प्रतिगृह्णन्ति स्मेत्याह—**उभयेनापि** प्रकारेण शुद्धाशुद्धद्रव्यप्रतिग्रहणपरेणापि **वयं** दक्षिणामाहात्म्यविदो **दक्षिणां प्रतिगृह्य दक्षिष्यामह एव** वर्धिष्यामह एवेति मन्यमाना अनूदेश्यामपि प्रतिगृह्णन्ति स्म । ते तादृशीमपि दक्षिणां प्रतिगृह्य अदक्षन्त अवर्धन्त । तस्मादन्योऽप्येवंविद्वान् अनूदेश्यामपि दक्षिणां प्रतिगृह्य दक्षत एव । अथान्यमविद्वांसं सा **प्रह्लीनाति** नाशयत्येव न तु वर्धयति । व्ली विशरणे ॥

इति द्वितीये काठके अष्टमोऽनुवाकः.

[1]तꣳ हैतमेके पशुबन्ध एवोत्तरवेद्यां चिन्वते । उत्तरवेदि संम्मित एषोऽग्निरिति वदन्तः । तन्न तथा कुर्यात् । एतमग्निं कामेन व्यर्द्धयेत् । स एनं कामेन व्यृद्धः । कामेन व्यर्द्धयेत् । सौम्ये वावैनमध्वरे चिन्वीत । यत्र वा भूयिष्ठा आहुतयो हूयेरन् । एतमग्निं कामेन समर्द्धयति । स एनं कामेन समृद्धः ॥५०॥ कामेन समर्द्धयति । [2]अथ हैनं पुरर्षयः । उत्तरवेद्यामेव सत्रियमचिन्वत । ततो वै तेऽविन्दन्त प्रजाम् । अभि स्वर्गं लोकमजयन् ।

---

[1]तं हैतमित्यादि ॥ तमेतं नाचिकेतमग्निं केचित्पशुबन्ध एवोत्तरवेद्यां चिन्वते । उत्तरवेदिसंमित उत्तरवेदिस्थानीय एषोऽग्निः सावित्रवदुत्तरवेदिदेशे चितत्वात् । उत्तरवेदिमतां प्रथमः पशुबन्धः, तस्मात्तत्रैव चेतव्यो नान्यत्रेति वदन्तः पशुबन्ध एव चिन्वते । तत्तथा न कुर्यात्, तथा कुर्वन्नेतमग्निं हि कामेन भूयिष्ठाहुतिलाभाभिलाषेण व्यर्धयेत् वियोजयेत्, ततोऽसौ वृद्धिकामो यजमानमपि तदीयेन कामेन व्यर्धयेत् । तस्मात्सौम्येऽध्वरे चेतव्यः । यत्र वा चातुर्मास्यादौ भूयिष्ठा बहुतरा आहुतयो हूयेरन् तत्र चेतव्यः । एतमग्निमित्यादि । गतम् ॥

[2]अथ हैनमित्यादि ॥ सत्रीयं सत्रे भवम् । गतमन्यत् ॥

विन्दते एव प्रजाम् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । [3]अथ हैनं वायुर् ऋद्धिकामः ॥५१॥ यथान्युप्तमेवोपदधे । ततो वै स एतामृद्धिमाप्नोत् । यामिदं वायुर् ऋद्धः । एतामृद्धिमृप्नोति । यामिदं वायुर् ऋद्धः । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । [4]अथ हैनं गोबलो वार्ष्णः पशुकामः। पाङ्क्तमेव चिक्ये । पञ्च पुरस्तात् ॥५२॥ पञ्च दक्षिणतः । पञ्च पश्चात् । पञ्चोत्तरतः । एकां मध्ये । ततो वै स सहस्रं पशून्प्राप्नोत् । प्र सहस्रं पशूनाप्नोति । योऽग्निं नाचिकेतं चिनुते । य उ चैन-

---

[3]अथ हैनमिति ॥ यथान्युप्तं यथानिपतितेष्टकं अञ्जलिना गृहीत्वा वेद्यां चेतिता इष्टका यथा पतितास्तथैवोपहितवान् । ततो वायुरेतामृद्धिमाप्नोत् यामृद्धिमृद्धो वायुरिदानीमस्माभिर्गृह्यते । इदमिति क्रियाविशेषणम् । एतामित्यादि फलस्तुतिः ॥

[4]अथ हेति ॥ गोबलो नाम वृष्णेरपत्यं पाङ्क्तं चिक्ये चितवान् चतसृषु दिक्षु पञ्च पञ्च, एकां मध्ये । एवं पञ्चत्वान्वयात् पाङ्क्तत्वम् । पाङ्क्तस्य चेता वेदिता च सहस्रं पशून् प्राप्नोति ॥

मेवं वेद । [5]अथ हैनं प्रजापतिर्ज्यैष्ठ्यकामो यशः-स्कामः प्रजननकामः । त्रिवृतमेव चिक्ये ॥५३॥ सप्त पुरस्तात् । तिस्रो दक्षिणतः । सप्त पश्चात् । तिस्र उत्तरतः । एकां मध्ये । ततो वै स प्र यशो ज्यैष्ठ्यमाप्नोत् । एतां प्रजातिं प्राजायत । यामिदं प्रजाः प्रजायन्ते । त्रिवृद्वै ज्यैष्ठ्यम् । माता पिता पुत्रः ॥५४॥ त्रिवृत्प्रजननम् । उपस्थो योनिर्मध्यमा । प्र यशो ज्यैष्ठ्यमाप्नोति । एतां प्रजातिं प्रजायते । यामिदं प्रजाः प्रजायन्ते । योऽ-

---

[5]अथेति ॥ ज्यैष्ठ्यं प्राधान्यं, यशः ख्यातिः, प्रजननं प्रजासमृद्धिः । 'शीलिकामि' इति नप्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च । त्रिवृतं संख्यात्रयान्वितम् । पुरस्तात्पश्चाच्च सप्त सप्त, दक्षिणत उत्तरतश्च तिस्रस्तिस्रः, एकां मध्य इति । एतां प्रजातिमिति । एतां प्रजातिं प्रजननसामर्थ्यं प्राप्नोत् यां प्रजा इदं प्रजायन्ते । त्रिवृद्वा इत्यादि । त्र्यवयवं ज्यैष्ठ्यं मात्रादयस्त्रयस्संयुक्ताः प्रशस्यतमा लोके भवन्तीति । प्रजननं च त्र्यवयवमुपस्थादित्रयस्य प्रजननहेतुत्वात् । योनिमध्यस्थितं गर्भस्थानं मध्यमा । केचिदाहुः—उपस्थः पुमान्, योनिः स्त्री, मध्यमा गतिः नपुंसकमिति, सर्वप्रजननावृत्त्यभावादसमीचीनम् । प्रयश इत्यादि फलस्तुतिः ॥

ग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेदं । [6]अथ हैनमिन्द्रो ज्यैष्ठ्यंकामः । ऊर्ध्वा एवोपदधे । ततो वै स ज्यैष्ठ्यमगच्छत् ॥५५॥ ज्यैष्ठ्यं गच्छति । योऽग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेदं । [7]अथ हैनमसावादित्यस्स्वर्गकामः । प्राचीरेवोपदधे । ततो वै सोऽभि स्वर्गं लोकमजयत् । अभि स्वर्गं लोकं जयति । योऽग्निं नाचिकेतं चिनुते । य उं चैनमेवं वेदं । स यदीच्छेत् ॥५६॥ तेजस्वी यशस्वी ब्रह्मवर्चसी स्यामिति । प्राङाहोतुर्धिष्ण्यादुत्सर्पेत् । येयं प्रागाद्यशस्वती । सा मा प्रोर्णोतु । तेजसा यशसा ब्रह्मवर्चसेनेति । तेज-

---

[6]अथ हेति ॥ ऊर्ध्वाः मध्यादारभ्य ऊर्ध्वरीतिकाः आ स्वयमातृण्णायाः प्राचीरित्यर्थः, तस्याशिशरस्स्थानीयत्वादूर्ध्वा इत्युक्तम्॥

[7]अथ हेति ॥ प्राचीः पश्चिमस्वयमातृण्णामारभ्य आहवनीयादुत्सर्पेदिति केचित् । मन्त्रार्थस्तु—येयं वेदिः प्रागात् प्राची एति गच्छति । छान्दसो लुङ् । यशस्वती अन्नवती हविषामाधारत्वात् । सा तादृशी हविर्भिरासादितैश्छादिता मामपि तेजःप्रभृतिभिः प्रोर्णोतु प्रच्छादयत्विति ॥

स्यैव यशस्वी ब्रह्मवर्चसी भवति । [8]अथ यदीच्छेत् । भूयिष्ठं मे श्रद्दधीरन् । भूयिष्ठा दक्षिणा नयेयुरिति । दक्षिणासु नीयमानासु प्राच्येहि प्राच्येहीति प्राची जुषाणा वेत्वाज्यस्य स्वाहेति स्रुवेणोपहत्याहवनीये जुहुयात् ॥५७॥ भूयिष्ठमेवास्मै श्रद्दधते । भूयिष्ठा दक्षिणा नयन्ति । [9]पुरीषमुपधाय । चितिक्लृप्तिभिरभिमृश्य । अग्निं प्रणीयोपसमाधाय । चतस्र एता आहुतीर्जुहोति । त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम् । अग्नाविष्णू

[8]अथ यदीति ॥ भूयिष्ठां बहुतमां मयि श्रद्धां कुर्युः प्रजा भूयिष्ठाः मह्यं दक्षिणाः नयेयुरिति यदीच्छेत्, स दक्षिणानयनकाले 'प्राच्येहि' इति मन्त्रेण आहवनीये जुहुयात् स्रुवेणोपहत्य आज्यमादाय । मन्त्रार्थस्तु—हे दक्षिणे! प्राच्येहि अत्यर्थं प्राची आगच्छ इत्येवमस्माभिराहूयमाना अत एव प्राची त्वं जुषाणा प्रीयमाणा भवन्ती आज्यस्य वेतु पिबतु स्वा हुतमिदं तुभ्यमिति । यद्वा—क्रियासमभिव्याहारे लोट्, प्राच्येहि प्राची प्रकर्षेण प्राग्गच्छति, अथ यथासिद्ध्यनुप्रयोगश्छान्दसः॥

[9]पुरीषमुपधायेत्यादि ॥ चात्वालात्पुरीषमाहृत्य चितावुपधाय 'चित्तिमचित्तिम्'* इत्यादिभिश्चितिक्लृप्तिभिरभिमृश्याग्निं प्रणीयो

*सं. ५-५-४.

इति वसोर्धारायाः । अन्नपत इत्यन्नहोमः । सप्त ते अग्ने समिधस्सप्त जिह्वा इति विश्वप्रीः ॥५८॥

समृद्ध ऋद्धिकामः पुरस्तांचिकये पुत्रोऽगच्छद्दिच्छेज्जुहुयाद्विश्वप्रीः ॥ ९ ॥

पुरषयो वायुर्गोबलस्सहस्रं प्रजापतिस्त्रिवृदिन्द्रोसावादित्यस्स यदीच्छेत् ॥

[1]यां प्रथमामिष्टकामुपदधाति । इमं तया लोकमभि जयति । अथो या अस्मिन्लोके देवताः । तासाꣳ सायुज्यꣳ सलोकतामाप्नोति । यां द्विती-

पसमाधाय उपसमिध्य चतुर्गृहीतेन चतस्र आहुतीर्जुहोति 'त्वमग्ने रुद्रः'* इत्यादिभिरेतत्प्रपाठकाम्नातैश्चतुर्भिरनुवाकैः । तत्र 'नमस्ते रुद्र'† इति शतरुद्रीयस्य रूपं तत्स्थानीयं त्वमग्ने रुद्र इति प्रथमोऽनुवाकः । शतं रुद्रा देवता अस्य शतरुद्रीयम् । 'छ च' इति छः । वसोर्धाराया रूपं द्वितीयोऽनुवाकः, तृतीयोऽनुवाकोऽन्नहोमाख्यः अन्नसिद्धिहेतुः, चतुर्थोऽनुवाको विश्वप्रीर्नाम विश्वदेवताप्रीतिहेतुत्वात् । विश्वान् देवान् प्रीणातीति विश्वप्रीः ॥

इति द्वितीये काठके नवमोऽनुवाकः.

---

[1]यां प्रथमामित्यादि एकविंशतिमिष्टकाः स्तौति ॥ इममिति प्रथमत्वसाम्यात् । एवं सर्वत्र । अथो या इत्युक्ताभ्यस्तिसृ

---

*ब्रा. ३-११-२.  †सं. ४-५-१.

यामुपदधाति । अन्तरिक्षलोकं तयाऽभिजयति । अथो या अन्तरिक्षलोके देवताः । तासा॑ सायुज्य॑ सलोकतामाप्नोति । यां तृतीयामुपदधाति । अमुं तया लोकमभिजयति ॥ ५९ ॥ अथो या अमुष्मिन्लोके देवताः । तासा॑ सायुज्य॑ सलोकतामाप्नोति । अथो या अमूरितरा अष्टादश । य एवामी उरवश्च वरीया॑सश्च लोकाः । तानेव ताभिरभिजयति । कामचारो ह वा अस्योरुषु च वरीयस्सु च लोकेषु भवति । योऽग्निं नाचिकेतं चिनुते । य उ चैनमेवं वेद । [2]संवथ्सरो वा अग्निर्नाचिकेतः । तस्य वसन्तश्शिरः ॥ ६० ॥ ग्रीष्मो दक्षिणः पक्षः । वर्षा उत्तरः । शरत्पुच्छम् । मासाः कर्मकाराः । अहोरात्रे शतरुद्रीयम् । पर्जन्यो वसोर्धारा । यथा

---

भ्योऽन्या या अष्टादश ताभिः पूर्वोक्ता उरवो वरीयांसश्च ये लोकास्तानभिजयति । कामचार इत्यादि गतम् ॥

[2]संवत्सरो वा इत्यादि ॥ शिरःप्रभृतिस्थानीया वसन्तादयः एकदेशत्वात् । कर्मकारा ऋत्विजः, तत्स्थानीया मासाः इष्टसंपादित्वात् । शतरुद्रस्थानीया अहोरात्राः रौद्रीणामाहुतीना-

वै पर्जन्यस्सुवृष्टं वृष्ट्वा । प्रजाभ्यस्सर्वान्कामान्थ्सं-
पूरयति । एवमेव स तस्य सर्वान्कामान्थ्संपूरय-
ति । योऽग्निं नाचिकेतं चिनुते ॥ ६१ ॥ य उं चै-
नमेवं वेद । [3]संवथ्सरो वा अग्निर्नाचिकेतः । तस्य
वसन्तश्शिरः । ग्रीष्मो दक्षिणः पक्षः । वर्षाः
पुच्छम् । शरदुत्तरः पक्षः । हेमन्तो मध्यम् । पू-
र्वपक्षाश्चितयः । अपरपक्षाः पुरीषम् । अहोरात्रा-
णीष्टकाः । [4]एष वाव सोऽग्निरग्निमयः पुनर्णवः ।
अग्निमयो ह वै पुनर्णवो भूत्वा । स्वर्गं लोकमेति ।

मुत्पत्त्याधारत्वात्, वसोर्धारास्थानीयः पर्जन्यः सर्वाभिमतसिद्धिहेतुत्वात् । यथेत्यादि । पर्जन्यो यथा सुवृष्टं अन्यूनानतिरिक्तशोभनवृष्टिक वृष्ट्वा प्रजानां सर्वान् कामांस्त्रिवर्गविषयान् संपूरयति सम्यक्साधयति एवमेव संवत्सरात्मा नाचिकेतस्तस्य सर्वान् मनोरथान् संपूरयति, य एतेन यजते, य उ चैनमेवं वेद ॥

[3]संवत्सरो वा इत्यादिरूपकान्तरं, गतम् ॥

[4]एष वावेति ॥ स एव नाचिकेतोऽग्निरेवमुक्तेन प्रकारेण संवत्सरात्मत्वात्तस्य चादित्याधीनत्वात् 'अग्निर्वाव संवत्सरः' * इति दर्शनात् संवत्सरस्स्वयमग्निरेवेति संवत्सरमयत्वादग्निमय उच्यते,

* ब्रा. १-४-१०.

आदित्यस्य सायुज्यम् । योऽग्निं नाचिकेतं चिनुते। य उ चैनमेवं वेद ॥ ६ २ ॥

अमुं तया लोकमभि जयति शिरश्चिनुत इष्टकाष्षट्ट ॥ १ ० ॥

लोकस्त्वमग्नेऽग्नाविष्णू अन्नपते सप्त ते अग्ने यत्ते चितमयं वावोशन् ह वै तᳵ हैतं यां प्रथमामिष्टकां दश ॥ १ ० ॥

लोक आदित्य ओजोऽस्यूर्ध्वा दिगनन्तᳵ ह वै कामेन ग्रीष्मो द्विषष्टिः ॥ ६ २ ॥ हरिः ओम्.

---

अत एव पुनर्णवः पुनःपुनर्नव उज्ज्वलः । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । अग्निमयो हेत्यादि । गतम् ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये

द्वितीये काठके दशमोऽनुवाकः.

समाप्तः प्रपाठकः.

हरिः ओम्.

# अथ द्वादशप्रपाठकः.

हरिः ओम् ॥ [1]तुभ्यं ता अङ्गिरस्तमाश्याम तं काममग्ने । [2]आशानां त्वा विश्वा आशाः । [3]अनु नोऽद्यानुमतिरन्विदनुमते त्वम् । [4]कामो भूतस्य

---

[1]अथ दिवश्श्येनयो नाम सप्तेष्टयस्त्रिहविष्काः, प्राग्दीक्षणीयायास्ताभिर्यजते । तासां सप्तानामेता याज्यानुवाकाः—'तुभ्यं ताः' इत्याद्याः । वैश्वदेवं काण्डं, तत्र सप्तानामप्याद्यन्तयोरग्निः कामोऽनुमतिश्च, तयोर्मध्येऽन्या देवताः आशादयः । तेन नवानां सस्विष्टकृतां विंशतिर्मन्त्राः । तेषामेतानि प्रतीकग्रहणानि । तत्राग्नेः—'तुभ्यं ता अङ्गिरस्तम विश्वाः' इति गायत्री, 'आश्याम तं काममग्ने तवोती' इति त्रिष्टुप् । एते 'त्वमग्ने रुद्रः'* इत्यत्र व्याख्याते ॥

[2]अथाशायाः—'आशानां त्वाऽऽशापालेभ्यः' इत्यनुष्टुप्, 'विश्वा आशा मधुना संसृजामि' इति त्रिष्टुप् । एते 'पुनर्नः'† इत्यत्र व्याख्याते ॥

[3]अथानुमतेः—'अनु नोऽद्यानुमतिर्यज्ञं' इत्यनुष्टुप्, 'अन्विदनुमते त्वं मन्यासै' इत्यनुष्टुप् । एते च 'इदं वामास्ये'‡ इत्यत्र व्याख्याते॥

[4]अथ कामस्य—'कामो भूतस्य भव्यस्य' इत्यनुष्टुप्, 'कामस्तदग्रे समवर्तताधि' इति त्रिष्टुप् । एते 'जुष्टो दमुनाः'§ इत्यत्र व्याख्याते॥

---

* सं. १-३-१४. † ब्रा. २-५-३. ‡ सं. ३-३-११. § ब्रा. २-४-१.

कामुस्तदग्ने । [5]ब्रह्म जज्ञानं पिता विराजाम् । [6]यज्ञो रायोऽयं यज्ञः । [7]आपो भद्रा आदित्पश्यामि । [8]तुभ्यं भरन्ति यो देह्यः । [9]पूर्वं देवा अपरेण प्राणापानौ । [10]हव्यवाहꣳस्विष्टम् ॥ १ ॥

तुभ्यं दश ॥ १ ॥

[5]अथ ब्रह्मणः—'ब्रह्म जज्ञानं प्रथमं पुरस्तात्' इति त्रिष्टुप्, 'पिता विराजामृषभः' इति त्रिष्टुप् । एते 'अभ्यस्थात्,'* 'अहमस्मि'† इत्यनुवाकयोर्व्याख्याते ॥

[6]अथ यज्ञस्य—'यज्ञो रायो यज्ञः' इति त्रिष्टुप्, 'अयं यज्ञो वर्धतां गोभिरश्वैः' इति त्रिष्टुप् । एते व्याख्याते‡ ॥

[7]अथापां—'आपो भद्रा घृतमित्, आदित्पश्याम्युत वा' इति त्रिष्टुभौ 'हिरण्यवर्णाः'§ इत्यत्र व्याख्याते ॥

[8]अथाग्नेर्बलिमतः—'तुभ्यं भरन्ति क्षितयो यविष्ठ, यो देह्यो अनमयत्' इति त्रिष्टुभौ 'वृषाऽस्यंशुः'¶ इत्यत्र व्याख्याते ॥

[9]अथानुवित्तेः—'पूर्वं देवा अपरेणानुपश्यन्, प्राणापानौ चक्षुश्श्रोत्रं' इति त्रिष्टुबस्तारपङ्क्ती 'वार्त्रहत्याय शवसे'** इत्यत्र व्याख्याते ॥

[10]अथ सर्वासां स्विष्टकृतः—'हव्यवाहमभिमातिषाहं, स्विष्टमग्ने' इति त्रिष्टुभौ 'जुष्टो दमूनाः'†† इत्यत्र व्याख्याते ॥

इति तृतीये काठके प्रथमोऽनुवाकः.

---

*सं. ४-२-८. †ब्रा. ३-८-८. ‡ब्रा. २-५-५. §सं. ५-६-१.
¶ब्रा. २-४-७. **ब्रा. २-५-६. ††ब्रा. २-४-१.

[1]देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥२॥ [2]तमाशाऽब्रवीत् । प्रजापत आशया वै श्राम्यसि । अहमु वा आशाऽस्मि । मां नु यजस्व । अथ ते सत्याऽऽशा भविष्यति । अनु स्वर्गं लोकं

[1]अथासामिष्टीनां ब्राह्मणम्—देवेभ्यो वा इत्यादि ॥ तिरोऽभवत् अदर्शनमगमत् । यज्ञक्रतवो यूपवन्तः । व्याख्यातमश्वमेधे* । एष्टय इति । एषणसाधनत्वादेष्टयः । अनोरर्थे आकारः । तस्मादेष्टयस्सत्य इष्टयोऽभूवन्नित्याचक्षते परोक्षत्वाय । विभक्तिव्यत्ययो वा । एष्टीस्ता इष्टय इत्याचक्षते । यद्वा—प्रजापतेस्स्वर्गान्वेषणकाले चेत्यस्य गता इष्टयः एष्टयः ताश्चेत्याः दिवश्श्येनयस्सप्त ॥

[2]इदानीं क्रमेण विदधाति—तमाशेति ॥ तं स्वर्गमन्विच्छन्तं प्रजापतिं आशा लिप्सा अब्रवीत्—हे प्रजापते! आशया

* ब्रा. ३-८-११.

वेत्स्यसीति । स एतमग्नये कामाय पुरोडाश-
मष्टाकपालं निरवपत् । आशायै चरुम् । अनु-
मत्यै चरुम् । ततो वै तस्य सत्याऽऽशाऽभ-
वत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा
अस्याशा भवति । अनु स्वर्गं लोकं विन्दति ।
य एतेन हविषा यजते । य उ चैनदेवं वेद । सो-
ऽत्र जुहोति । अग्नये कामाय स्वाहाऽऽशायै स्वा-
हा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गा-
य लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ ३ ॥

स्वर्गलिप्सया खलु त्वं श्राम्यसि आशा मे संप्रपद्यतामिति, सा खल्वाशाऽहमस्मि तस्मात् मां नु क्षिप्रं यजस्व, अथ अनन्तरमेव तवाशा सत्या भविष्यति अभिप्रेतफलवती भविष्यति ततश्चानन्तरमेव स्वर्गं लोकं वेत्स्यसि लप्स्यसे । स एतमित्यादि । गतम् । कामानां स्रावयिता कामसंज्ञोऽग्निः प्रथमः, आशा द्वितीया, अनुमतिस्तृतीया । सोऽत्रेति । अग्न्यादयस्त्रयो हविर्देवताः, प्रजापतिरिष्टेर्द्रष्टा, स्वर्गः प्राप्यः, स्विष्टकृत् इष्टसाद्गुण्यकारी । एतया उत्तरा व्याख्याताः ॥

[3]तं कामोऽब्रवीत् । प्रजापते कामेन वै श्राम्यसि। अहमु वै कामोऽस्मि । मां नु यजस्व । अथ ते सत्यः कामो भविष्यति । अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । कामाय चरुम् । अनुमत्यै चरुम्। ततो वै तस्य सत्यः कामोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यो ह वा अस्य कामो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये कामाय स्वाहा कामाय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ ४॥ [4]तं ब्रह्माब्रवीत्। प्रजापते ब्रह्मणा वै श्राम्यसि । अहमु वै ब्रह्मास्मि । मां नु यजस्व । अथ ते ब्रह्मण्वान् यज्ञो भविष्यति । अनु स्वर्गं लोकं वेथ्स्यसीति । स

[3]कामः इच्छा लिप्साया उत्तरकालं फलसाधनेषूपादित्सा इदमनेन साधयामीति ॥

[4]ब्रह्म आत्मा मन्त्रो वा । ब्रह्मण्वान् 'अनो नुट्' इति नुटि 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबुदात्तत्वम् ॥

एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। ब्रह्मणे चरुम्। अनुमत्यै चरुम्। ततो वै तस्य ब्रह्मण्वान् यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। ब्रह्मण्वान् ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद। सोत्र जुहोति। अग्नये कामाय स्वाहा ब्रह्मणे स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥५॥ [5]तं यज्ञोऽब्रवीत्। प्रजापते यज्ञेन वै श्राम्यसि। अहमु वै यज्ञोस्मि। मां नु यजस्व। अथ ते सत्यो यज्ञो भविष्यति। अनु स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। यज्ञाय चरुम्। अनुमत्यै चरुम्। ततो वै तस्य सत्यो यज्ञोऽभवत्। अनु स्वर्गं लोकमविन्दत्। सत्यो ह वा अस्य यज्ञो भवति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उ चैनदेवं वेद।

[5]यज्ञ इष्ट्यादिः ॥

सोत्रं जुहोति । अग्नये कामाय स्वाहा यज्ञाय स्वाहां । अनुमत्यै स्वाहां प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नयें स्विष्टकृते स्वाहेति॥६॥ [6]तमापोऽब्रुवन् । प्रजापतेऽप्सु वै सर्वे कामाश्श्रिताः । वयमु वा आपस्स्मः । अस्मान्नु यजस्व । अथ त्वयि सर्वे कामाश्श्रयिष्यन्ते । अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत् । अद्भ्यश्चरुम् । अनुमत्यै चरुम् । ततो वै तस्मिन्थ्सर्वे कामा अश्रयन्त । अनु स्वर्गं लोकमविन्दत् । सर्वे ह वा अस्मिन्कामाश्श्रयन्ते । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्रं जुहोति । अग्नये कामाय स्वाहाऽद्भ्यस्स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नयें स्विष्टकृते स्वाहेति ॥७॥ [7]तमग्निर्बलिमानब्रवीत् । प्रजापतेऽग्नये वै बलिमते सर्वाणि

---

[6]आपो यज्ञसंपादनद्वारेण इष्टिसाधन्यः ॥

[7]अग्निर्बलिमान्नाम । बलिः पूजा ॥

भूतानि बलिꣳ हरन्ति। अहमु वा अग्निर्बलिमानस्मि। मां नु यजस्व। अथ ते सर्वाणि भूतानि बलिꣳ हरिष्यन्ति। अनु स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अग्नये बलिमते चरुम्। अनुमत्यै चरुम्। ततो वै तस्मै सर्वाणि भूतानि बलिमहरन्। अनु स्वर्गं लोकमविन्दत्। सर्वाणि ह वा अस्मै भूतानि बलिꣳ हरन्ति। अनु स्वर्गं लोकं विन्दति। य एतेन हविषा यजते। य उं चैनदेवं वेद। सोत्र जुहोति। अग्नये कामाय स्वाहाऽग्नये बलिमते स्वाहा। अनुमत्यै स्वाहा प्रजापतये स्वाहा। स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति॥ ८॥ [8]तमनुवित्तिरब्रवीत्। प्रजापते स्वर्गं वै लोकमनु विविथ्ससि। अहमु वा अनुवित्तिरस्मि। मां नु यजस्व। अथ ते सत्याऽनुवित्तिर्भविष्यति। अनु स्वर्गं लोकं वेथ्स्यसीति। स एतमग्नये कामाय पुरोडाशमष्टाकपालं निरवपत्। अनुवित्त्यै

[8]अनुवित्तिस्साधनानुष्ठानानन्तरमेव साध्यलाभः॥

चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्याऽनुवित्तिरभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्यानुवित्तिर्भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये कामाय स्वाहाऽनुवित्त्यै स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ १ ॥ [१]ता वा एतास्सप्त स्वर्गस्य लोकस्य द्वारः । दिवश्श्येनयोऽनुवित्तयो नाम । आशा प्रथमा१ रक्षति । कामो द्वितीयाम् । ब्रह्म तृतीयाम् । यज्ञश्चतुर्थीम् । आपः पञ्चमीम् । अग्निर्बलिमान्षष्ठीम् । अनुवित्तिस्सप्तमीम् । अनु ह वै स्वर्गं लोकं वि-

[१]ता वा इत्यादि ॥ यथोक्तलक्षणाः ताः सप्तेष्टयः स्वर्गस्य द्वारः द्वारस्थानीयाः प्राप्त्युपाया इत्यर्थः । एता नानामार्गाः दिवश्श्येनयः दिवो द्युलोकस्य प्रापयित्र्यः । 'श्यैङ् गतौ' औणादिको निप्रत्ययः, एत्वं च । अनुवित्तय इति वाऽऽसां नाम, अनुष्ठानानन्तरमेव स्वर्गलाभहेतुत्वात् । तासां मध्ये प्रथमां द्वारमाशा रक्षति देवतात्वेन वर्तमाना अभिमतं साधयति । कामादयो द्वितीयाद्या रक्षन्ति । अनु ह वा इत्यादि स्तुतिर्गता ॥

न्दति । कामचारोऽस्य स्वर्गे लोके भवति । य एताभिरिष्टिभिर्यजते । य उं चैना एवं वेद । [10]ता-स्वन्विष्टि । पष्ठौहीवरां दद्यात्कꣳसं च । स्त्रियै चाभारꣳ समृद्ध्यै ॥ १० ॥ २ ॥

[1]तपसा देवा देवतामग्रं आयन् । तपसर्षय-स्सुवरन्वविन्दन् । तपसा सपत्नान्प्रणुदामारातीः ।

---

[10]तास्वित्यादि ॥ अन्विष्टि इष्टाविष्टौ एतानि दद्यात् तद-भीप्सितफलसमृद्ध्यै भवति । तत्र पष्ठौही चतुर्वर्षा गौः वरिष्ठा पष्ठौहीवरा प्रसूता प्राप्तगर्भा वा । कंसं भाजनं किंचित् । स्त्रियै च आभारं किंचिदाभरणं दद्यात् ॥

इति तृतीये काठके द्वितीयोऽनुवाकः.

---

[1]अथापाघा नाम पञ्चेष्टयः । वैश्वदेवं काण्डम् । एताश्च त्रिहविष्काः । उदवसानीयानन्तरमेताभिर्यजते । आसामाद्यन्तयो-रग्न्यनुमत्योर्मध्ये तपआदयः पञ्च देवताः । तत्र तासामेता याज्यानुवाक्याः 'तपसा देवाः' इत्याद्याः । अग्न्यनुमतिस्विष्ट-कृतामन्ते वक्ष्यन्ते * । तत्र तपसः—प्रथमा बृहती । तपसा प्रकृष्टेन देवा इन्द्रादयः अग्रे आदौ देवतां आयन् अग-च्छन् । ऋषयो दर्शनवन्तः तपसैव स्वरन्वविन्दन् अनुक्रमे-

---

* कृतां दिवश्श्येनेष्टिषु गातः इति, पा ॥

येने॒दं विश्वं॑ परि॑भूतं॒ यद॒स्ति । [2]प्र॒थ॒म॒जं दे॒वꣳ ह॒विषा॑ विधेम । स्व॒यं॒भु ब्रह्म॑ पर॒मं तपो॒ यत् । स ए॒व पु॒त्रस्स पि॒ता स मा॒ता । तपो॑ ह य॒क्षं प्र॑थ॒मꣳ संब॑भूव । [3]श्र॒द्धया॑ दे॒वो दे॒व॒त्वम॑श्नुते । श्र॒द्धा प्र॑ति॒ष्ठा लो॒कस्य॑ दे॒वी ॥ ११ ॥ सा नो॑ जुषा॒णोप॑

---

णालभन्त । तस्माद्वयमपि तपसा सपत्नान् शत्रून् अरातीः अदानशीलान् प्रणुदाम प्रकर्षेण नाशयामः । तपो विशेष्यते— येन तपसा इदं विश्वं परिभूतं सर्वत उत्पन्नं सर्वतो व्याप्तं वा यत्किञ्चिच्चेतनं वा विद्यते तदिदं विश्वं येन परिभूतं तेन तपसेति ॥

[2]प्रथमजमिति त्रिष्टुप् ॥ प्रथमजं अग्रे जातं देवं दीप्ततमं स्वयंभु स्वयमेव भूतं अनन्यजनितं नित्यसंनिहितत्वादीश्वरे, ब्रह्म परिवृढं परमं सर्वस्मात्प्रकृष्टं ईदृशं यत्तपः तदेव वयं हविषा परिचरेम । पुनश्च तपो वर्णयति—तदेव तपः पुत्रः पिता माता च, तत्कार्यकरणात् । प्रथमजमिति यदुक्तं तत्समर्थयते—तपः खलु यक्षं यजनीयं पूज्यं प्रथमं सर्वस्यादौ संबभूव संपद्यते स्म । यद्वा—परं ब्रह्म यक्षरूपं प्रथमं आदौ तप एव संबभूव तपसो महिम्ना तादृशं ब्रह्माभूदिति ॥

[3]अथ श्रद्धायाः—श्रद्धयेति विराट् ॥ देवस्सर्वोपि श्रद्धया देवत्वमश्नुते आश्नुत । यद्वा—यस्सर्वोपि जनो देवो भूत्वा दीप्तिमान् भूत्वा देवत्वं प्राप्नोति श्रद्धया । किञ्च—लोकस्य सर्वस्य श्रद्धा

यज्ञमागात् । कामवत्साऽमृतं दुहाना । [4]श्रद्धा देवी प्रथमजा ऋतस्य । विश्वस्य भर्त्री जगतः प्रतिष्ठा । ताꣳ श्रद्धाꣳ हविषा यजामहे । सा नो लोकममृतं दधातु । ईशाना देवी भुवनस्याधिपत्नी । [5]आगात्सत्यꣳ हविरिदं जुषाणम् । यस्माद्देवा जज्ञिरे भुवनं च विश्वे । तस्मै विधेम हवि-

प्रतिष्ठा स्थितिहेतुः । देवी दीप्तिमती । सा तादृशी श्रद्धा अस्माकं यज्ञमुपागात् आगच्छतु जुषाणा प्रीयमाणा कामवत्सा कामस्थानीयवत्सा अमृतं अमरणमपि पुरुषेभ्यो दुहाना क्षरन्ती। पुरुषाणां काम एवाभिमतक्षरणहेतुः, कामवत्सेत्युक्तम् ॥

[4]श्रद्धा देवी इति शक्करी पञ्चपदा ॥ ऋतस्य यज्ञस्य प्रथमजा उपकारकत्वेनारम्भ एव जाता देवी श्रद्धा । विश्वस्य जगतः भर्त्री पोषयित्री प्रतिष्ठा स्थितिहेतुश्च । तां तादृशीं श्रद्धां वयं हविषा एतेन यजामहे । साऽस्माभिरिष्टा अस्मभ्यं अमृतं अविनाशं लोकं स्थानं दधातु ददातु । भुवनस्य भूतजातस्य सर्वस्य ईशाना देवी अधिपत्नी अधिकं पालयित्री च । तस्मात् सा नो लोकममृतं दधात्विति ॥

[5]अथ सत्यस्य—आगादिति ॥ अतःपरं सर्वास्त्रिष्टुभः । आगात् आगच्छतु । सत्यं सत्यात्मिका देवता इदमस्मदीयं हविः जुषाणं सेवमानं, यद्वा—जुषाणं प्रीयमाणं सत् इदं हविरागात्।

षां घृतेन ॥१२॥ यथा देवैस्सधमादं मदेम । [6]यस्य प्रतिष्ठोर्वन्तरिक्षम् । यस्माद्देवा जज्ञिरे भुवनं च सर्वे । तथ्सत्यमर्चदुपयज्ञं न आगात् । ब्रह्माहुतीरुपमोदमानम् । [7]मनसो वशे सर्वमिदं बभूव । नान्यस्य मनो वशमन्वियाय । भीष्मो हि देवस्सहसस्सहीयान् । स नो जुषाण उप यज्ञमा-

---

यस्मात्सत्याद्विश्वे देवा जज्ञिरे, भुवनं च विश्वं जज्ञे, तस्मै सत्याय घृतेनानेन हविषा विधेम परिचरेम । किमर्थमिति चेत्—यथा वयं देवैस्सधमादं सहस्थानं मदेम तदनुरूपं विधेम । मद तृप्तियोगे पुरादिराधृषीयो द्रष्टव्यः ॥

[6]यस्येति ॥ यस्य सत्यस्य प्रतिष्ठा स्थानं उरु विस्तीर्णं अन्तरिक्षं तद्वद्विस्तीर्णमिति यावत् । यस्मात् सर्वे देवा भुवनं च जज्ञिरे । गतम् । तत्तादृशं सत्यं अस्माकं यज्ञमुपागात् उपगच्छतु । कीदृशं सत्? अर्चत् पूजयत् अस्मद्यज्ञं प्रशंसत् तुष्यदिति यावत् । ब्रह्म परिबृढं आहुतीः अस्मदीयाः उपमोदमानम् ॥

[7]अथ मनसः—मनसो वश इति ॥ इदं विश्वं मनसो वशे विधेयत्वे बभूव भवति वर्तते, बन्धमोक्षयोरपि तन्निमित्तत्वात् । अयं तु नान्यस्य कस्यचिदपि वशं विधेयत्वं अन्वियाय अनुगच्छति, इन्द्रियादीनामपि स्वस्यैव विधेयत्वात् । तस्मात मनोनामाऽयं भीष्मो देवः दुर्धर्षः परमस्वतन्त्रः कश्चिद्देवः । सहसः

गात् । [8]आकूतीनामधिपतिं चेतसां च ॥ १३ ॥ संकल्पजूतिं देवं विपश्चिम् । मनो राजानमिह वर्धयन्तः । उपह्वेऽस्य सुमतौ स्याम । [9]चरणं पवित्रं विततं पुराणम् । येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूताः । अति पाप्मा-

सहस्वतः बलवतोपि सहीयान् सहस्वत्तरः । 'विन्मतोर्लुक्' इति लुक् । स मनआत्मा देवोऽस्माकं यज्ञं जुषाणः उपागच्छतु ॥

[8] आकूतीनामिति ॥ आकूतीनां अभिप्रायाणामध्यवसायानां अधिपतिं आधिकं पातारमुत्पादकं चेतसां चित्तवृत्तीनां सर्वज्ञानविकल्पानां चाधिपतिं, संकल्पजूतिं संकल्पः जूतिर्गतिरस्येति संकल्पजूतिः तत्कारित्वात्, देवं देवनशीलं व्यवहर्तृस्वभावं, विपश्चिं मेधाविनं ईदृशं मनआत्मकं देवं राजानं दीप्यमानं इहोपहवे यज्ञे वर्धयन्तः स्तुत्यादिभिस्समर्धयन्तो वयं अस्य देवस्य सुमतौ कल्याणबुद्धावनुग्रहात्मिकायां स्याम भूयास्म ॥

[9] अथ चरणस्य—चरणं पवित्रमिति ॥ चर्यत इति चरणं धर्मः पवित्रं शोधकं विततं विस्तीर्णं पुराणं सर्वेभ्यः पूर्वं विद्यमानमीदृशेन येन पूतश्शुद्धो जनो दुष्कृतानि पापानि तरति नाशयति, तेन तादृशेन पवित्रेण शोधकेन शुद्धेन स्वयमप्यधर्मरहितेन धर्मेण पूताः क्षाळितसर्वदुष्कृता वयं पाप्मानं अधर्मं सर्वं प्राचीनमपि अरातिं अदानशीलं सर्वश्रेयसां बाधकं अतितरेम अतिक्रम्य पुण्यं स्थानं गच्छेम ॥

नमरातिं तरेम । [10]लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितान्दधातु । [11]अग्निर्मूर्धा भुवः । [12]अनु नोऽद्यानुमतिरन्विदनुमते त्वम् । [13]हव्यवाहꣳ स्विष्टम् ॥ १४ ॥

देवी घृतेन चेतसां च दोहमानं चत्वारि च ॥ ३

[10]लोकस्येत्यादि ॥ लोकस्य प्रकाशवतः स्थानस्य स्वर्गादेः द्वारं प्राप्तिहेतुं, अर्चिमत् अर्चनवत् सर्वैरपि पूज्यम् । 'इन् सर्वधातुभ्यः' इतीन्प्रत्ययः, 'ह्रस्वनुड्भ्यां मतुप्' इति मतुप उदात्तत्वम् । पवित्रं शोधकं ज्योतिष्मत् दीप्तिमत् भ्राजमानं उज्ज्वलितं महस्वत् ख्यातिमत, अमृतस्य धाराः बहुधा बहुप्रकाराः दोहमानं धार्मिकेभ्य उत्पादयत् ईदृशं चरणं नः अस्मान् सुधितान् सुष्ठु निहितान् लोके दधातु स्थापयतु। 'सुधितवसुधित' इति निपात्यते ॥

[11]अथ षण्णां प्रतीकग्रहणं, तत्राग्नेः—'अग्निर्मूर्धा' इति गायत्री, 'भुवो यज्ञस्य' इति त्रिष्टुप् । व्याख्याते* ॥

[12]अथानुमतेः—'अनु नोद्य' इति, 'अन्विदनुमते' इति । प्रथमेऽनुवाके गते† ॥

[13]अथ स्विष्टकृतः—'हव्यवाहं, स्विष्टं' इति ॥ एते च तत्रैव गते‡ ॥

इति तृतीये काठके तृतीयोऽनुवाकः.

*सं. ४-४-४. †सं. ३-३-११. ‡ब्रा. २-४-१.

[1]देवेभ्यो वै स्वर्गो लोकस्तिरोऽभवत् । ते प्रजापतिमब्रुवन् । प्रजापते स्वर्गो वै नो लोकस्तिरोऽभूत् । तमन्विच्छेति । तं यज्ञक्रतुभिरन्वैच्छत् । तं यज्ञक्रतुभिर्नान्वविन्दत् । तमिष्टिभिरन्वैच्छत् । तमिष्टिभिरन्वविन्दत् । तदिष्टीनामिष्टित्वम् । एष्टयो ह वै नाम । ता इष्टय इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः ॥ १५ ॥ [2]तं तपोऽब्रवीत् । प्रजापते तपसा वै श्राम्यसि । अहमु वै तपोऽस्मि । मां नु यजस्व । अथ ते सत्यं तपो भविष्यति । अनु स्वर्गं लोकं वेत्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । तपसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं तपोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य तपो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये

[1]देवेभ्यो वा इत्यादि ॥ व्याख्यातम् * ॥

[2]तं तपोऽब्रवीदिति ॥ उपवासादिकं शोधकं तपः ॥

* ब्रा. ३-१२-२.

स्वाहा तपसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ १६ ॥ [3]तꣳ श्रद्धाऽब्रवीत् । प्रजापते श्रद्धया वै श्राम्यसि । अहमु वै श्रद्धाऽस्मि । मां नु यजस्व । अथ ते सत्या श्रद्धा भविष्यति । अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । श्रद्धायै चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्या श्रद्धाऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्या ह वा अस्य श्रद्धा भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये स्वाहा श्रद्धायै स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ १७ ॥ [4]तꣳ सत्यमब्रवीत् । प्रजापते सत्येन वै श्राम्यसि । अहमु वै सत्यमस्मि । मां नु यजस्व । अथ ते सत्यꣳ सत्यं भविष्यति ।

[3]श्रद्धा श्रुतिस्मृत्यादिकर्मादरः ॥

[4]सति साधु सत्यं तथाभावः ॥

अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । सत्याय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यꣳ सत्यमभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य सत्यं भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये स्वाहा सत्याय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥१८॥ [5]तं मनोऽब्रवीत् । प्रजापते मनसा वै श्राम्यसि । अहमु वै मनोऽस्मि । मां नु यजस्व । अथ ते सत्यं मनो भविष्यति । अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । मनसे चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं मनोऽभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य मनो भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोत्र जुहोति । अग्नये स्वाहा

[5]मनः अन्तःकरणम् ॥

मनसे स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥१९॥ [6]तं चरणमब्रवीत् । प्रजापते चरणेन वै श्राम्यसि । अहमु वै चरणमस्मि । मां नु यजस्व । अथ ते सत्यं चरणं भविष्यति । अनु स्वर्गं लोकं वेथ्स्यसीति । स एतमाग्नेयमष्टाकपालं निरवपत् । चरणाय चरुम् । अनुमत्यै चरुम् । ततो वै तस्य सत्यं चरणमभवत् । अनु स्वर्गं लोकमविन्दत् । सत्यꣳ ह वा अस्य चरणं भवति । अनु स्वर्गं लोकं विन्दति । य एतेन हविषा यजते । य उ चैनदेवं वेद । सोऽत्र जुहोति । अग्नये स्वाहा चरणाय स्वाहा । अनुमत्यै स्वाहा प्रजापतये स्वाहा । स्वर्गाय लोकाय स्वाहाऽग्नये स्विष्टकृते स्वाहेति ॥ २० ॥ [7]ता वा एताः पञ्च

[6]चरणं धर्मः ॥

[7]ता एताः तपःप्रभृतिदेवताकाः पञ्चेष्टयोऽपाघा नाम पापापघातहेतवः, अनुवित्तयः अनुक्रमेणेष्टलाभहेतवः, स्वर्गस्य लोकस्य द्वारस्थानीयाः । तासां मध्ये प्रथमामिष्टिं तपो रक्षतीत्यादि गतम्* ॥

*तै. ब्रा. ३-१२-२.

स्वर्गस्य लोकस्य द्वारः। अपाघा अनुवित्तयो नाम।
तपः प्रथमाꣳरक्षति। श्रद्धा द्वितीयाम्। सत्यं तृ-
तीयाम्। मनश्चतुर्थीम्। चरणं पञ्चमीम्। [8]अनु
ह वै स्वर्गं लोकं विन्दति। कामचारोऽस्य स्वर्गे
लोके भवति। य एताभिरिष्टिभिर्यजते। य उ
चैना एवं वेद। तास्वन्विष्टिः। पष्ठौहीवरां दद्या-
त्कꣳसं च। स्त्रियै चाभारꣳ समृद्ध्यै ॥२१॥४॥

[1]ब्रह्म वै चतुर्होतारः। चतुर्होतृभ्योऽधि य-
ज्ञो निर्मितः। नैनꣳ शप्तम्। नाभिचरितमाग-

---

[8]अनु ह वा इत्यादि ॥ व्याख्यातम्* ॥

इति तृतीये काठके चतुर्थोऽनुवाकः.

---

[1]अथ चातुर्होत्राग्निकाण्डः हव्यवाडार्षेयः एकोऽनुवाकः—ब्रह्म वै चतुर्होतार इत्यादि ॥ ब्रह्म आत्मा, तदेव चतुर्होतारः दशहोत्रादिसप्तहोत्रान्ताः पञ्चानुवाकाः 'चित्तिस्स्रुक्'† इत्यादयः। आत्मन्नात्मन्नित्याहूतः प्रजापतेरात्मा दशहूतत्वादिहेतुकदशहोत्रादि-रूपेणाविरभवत्, ते च सर्वेऽपि दशहोत्रादयश्चतुर्होतारः। यथो-क्तम्—'अथ कस्माच्चतुर्होतार उच्यन्त इति। इन्द्रो वै चतु-र्होता'‡ इति। तेभ्यश्चतुर्होतृभ्योऽधियज्ञो निर्मितः तत्प्रधान

---

*ब्रा. ३-१२-२. †आ. ३-१. ‡ब्रा. २-३-१.

च्छति । य एवं वेद । [2]यो ह वै चतुर्होतॄणां चतुर्होतृत्वं वेद । अथो पञ्चहोतृत्वम् । सर्वा ह्यस्मै दिशः कल्पन्ते । [3]वाचस्पतिर् होता दशहोतॄणाम् । पृथिवी होता चतुर्होतॄणाम् ॥ २२ ॥
अग्निर् होता पञ्चहोतॄणाम् । वाग्घोता षड्ढोतॄणाम् ।

---

उदपादि चातुर्होत्राण्यः । एवमेतेषां ब्रह्मत्वमेभ्यश्च यज्ञोत्पत्तिं यो वेद जानाति एनं वेदितारं शप्तं शापः अभिचरितमभिचारः श्येनादिक्रतुः तदुभयमपि नागच्छति न स्पृशति ॥

[2]यो हेति ॥ अथैषां पञ्चानां चतुर्होतृत्वं पञ्चहोतृत्वमपि यो वेद अस्मै सर्वा दिशः कल्पन्ते इष्टसिद्धये भवन्ति । सर्वे वा दिग्वासिनोऽस्य विधेया इति ॥

[3]तदुभयमिदानीं दर्शयति—वाचस्पतिरित्यादि ॥ छत्रिन्यायेन होतृसहिता अध्वर्य्वादयोऽप्यृत्विजो होतारः, होत्रादित्वाद्वा । चत्वारो होतारः ऋत्विजो विलक्षणाः प्रत्यनुवाकं येषां ते चतुर्होतारः । पञ्चस्वनुवाकेषु च ते भिद्यन्ते । प्रथमे वाक्पत्यादयः, उपवक्ता, ब्रह्म, हविः, अग्नीत् । द्वितीये पृथिव्यादयः । तृतीयेऽग्न्यादयः । चतुर्थे वागादयः, अभिगरो ब्रह्मा । अत एव वचनात् 'सूर्यं ते चक्षुः'* इत्यस्य षड्ढोतृग्रहणं, तस्य होतृरहितत्वात् । पञ्चमे महाहविरादयः । एवं विलक्षणहोत्रा-

---

*आ. ३-४.

महाहविर्होता सप्तहोतॄणाम् । एतद्वै चतुर्होतॄणां चतुर्होतृत्वम् । अथो पञ्चहोतृत्वम् । सर्वा हास्मै दिशः कल्पन्ते । य एवं वेद । ४एषा वै सर्वविद्या । एतद्भेषजम् । एषा पङ्क्तिस्स्वर्गस्य लोकस्याञ्जसा-यनिस्स्रुतिः ॥ २३ ॥ एतान् योऽध्येत्यच्छिदिर्दूरशो यावत्तरसम् । स्वरेति । अनपब्रवस्सर्वमायुरेति ।

---

दिचतुष्टयवत्त्वाच्चतुर्होतार एते । 'ऋतश्छन्दसि' इति क्विबभावः ततो भावप्रत्ययः, तस्य सतिशिष्टत्वादुदात्तत्वम् । अथ पञ्चप्रकारं होतृत्वमेषां, पञ्चस्वनुवाकेषु तस्य भिन्नत्वात्, पञ्चानां होतृत्वानां समाहारः पञ्चहोतृत्वम् । 'अनिगन्त' इत्युत्तरपदे व्यत्ययेन द्विगुस्वरः, बहुव्रीहिरेव वा चतुर्होतृत्वमित्यनुवादार्थः । अयमर्थः— यश्चतुर्होतॄणां चतुर्होतृत्वं होत्रादिचतुष्टयवत्त्वं, अथो अपिच एषां इदं चतुर्होतृत्वं पञ्चहोतृत्वं पञ्चप्रकारेण तद्यच्च यो वेदेति । सर्वा हास्मा इति । पूर्वं विदित्वा यष्टुः फलं, इदं तु वेदितुरेव ॥

'एषा वा इति ॥ एते पञ्चाध्यायाः सर्वविद्या सर्वविद्या-पुण्यफलहेतवः सर्वविद्यापेक्षं स्त्रीत्वम् । एतत् भेषजं, एतेऽनुवाकास्सर्वानिष्टोपशमनभेषजस्थानीयाः, भेषजापेक्षं नपुंसकत्वम् । एवं सर्वत्र । एतेऽनुवाकास्स्वर्गस्य लोकस्य अञ्जसायनिः आर्जवेन गमनसाधनभूता स्रुतिः मार्गः । 'अञ्जस उपसंख्यानं' इति तृतीयाया अलुक् । स्रुतिर्विशेष्यते—पङ्क्तिः पञ्चपदा पञ्चा-

विन्दते प्रजाम् । रायस्पोषं गौपत्यम् । ब्रह्मवर्चसी भवति । एतान् योऽध्यैति । स्पृणोत्यात्मानम् । प्रजां पितॄन् । [5]एतान् वा अरुण औपवेशिर्विदाञ्चकार ॥ २४ ॥ एतैरधिवादमपाजयत् । अथो विश्वं पाप्मानम् । स्वर्ययौ । एतान् योऽध्यैति ।

---

ध्यायीरूपत्वात् । यद्वा—एषा पङ्क्तिः पञ्चाध्यायी स्वर्गस्याञ्जसायनिः स्तुतिः । अथ एताननुवाकान् योऽध्यैति अधीते । व्यत्ययेन परस्मैपदम् । अथवा अध्यैति अधिगच्छति अर्थमनुसंदधानः पठति । 'एत्येधत्यूठ्सु' इति वृद्धिः । अच्छादिर्दर्शे अगृहदर्शने प्रदेशे अरण्ये । छान्दसं ह्युच्चदात्तत्वम् । यद्वा—न गृहदर्शने । असमस्त एव निषेधवचनोऽकारः । यावत्तरसं यथाबलं शक्तिमवयन् । पूर्ववद्द्व्युदात्तत्वं छान्दसं, असमासो वा । तर एव तरसं तेनेत्यर्थः । स्वरेति प्राप्नोति, अनपब्रवः वक्तव्यान्तरावक्षिप्तं वचनमपब्रवः तद्रहितोऽनपब्रवः । वच्यादेशाभावश्छान्दसः । ईदृग्भूतो योऽधीते स सर्वं पुरुषायुषं जीवति, लभते च प्रजां भूयिष्ठां, रायस्पोषं धनपुष्टिं गौपत्यं गोस्वामित्वं च विन्दति, ब्रह्मवर्चसी च भवति । अथैतदध्ययनेन आत्मानं प्रजां च पितॄंश्च प्रीणयति ॥

[5]एतान् वा इत्यादि ॥ अरुणो नाम उपवेशस्यापत्यं विदांचकार याथातथ्येन एतान् विदितवान् । 'उषविदजागृभ्यः' इत्यांप्रत्ययः, अदन्तत्वाल्लघूपधगुणाभावः । ततस्स एतैर्विदितैः

अधिवादं जयति । अथो विश्वं पाप्मानम् । स्वरेति । [6]एतैरग्निं चिन्वीत स्वर्गकामः । एतैरायुष्कामः । प्रजापशुकामो वा ॥ २५ ॥ [7]पुरस्ताद्दशंहोतारमुदंञ्चमुपदधाति यावत्पदम् । हृदयं यजुषी पत्न्यौ च । दक्षिणतः प्राञ्चं चतुर्होतारम् । पश्चादुदञ्चं पञ्चहोतारम् । उत्तरतः प्राञ्चꣳ षड्ढोतारम् ।

---

अधिवादं अपाजयत्, उपरिवक्ता अधिवादः । य एनं वादे न्यग्भावयति तमपाजयत् । विश्वं च पाप्मानमपाजयत्, ययौ च स्वर्गम् । एतानित्यादिरध्येतुः फलनिर्देशः ॥

[6]एतैरित्यादि ॥ एतैरेव महाप्रभावैः दशहोत्रादिभिः सामर्थ्यात् सग्रहैस्सहृदयैस्सप्रतिग्रहैस्ससंभारयजुर्भिस्सपत्नीकैः अग्निं चिन्वीत, स्वर्गकामो वा आयुष्कामो वा प्रजां पशूंश्च कामयमानो वा । प्रजापशुशब्दात् द्वंद्वात् 'शीलिकामि' इत्यादिना णप्रत्ययः, पूर्वपदप्रकृतिस्वरत्वं च । तत्र प्रजापशूनां कथंचिद्देवतात्वात् 'देवताद्वंद्वे च' इत्याद्युदात्तत्वम् ॥

[7]इदानीमुपधानक्रमं दर्शयति—पुरस्तादित्यादि ॥ अग्रेण दर्भस्तम्बं दक्षिणत आरभ्य उदञ्चं दशहोतारमुपदधाति । यावत्पदं यावन्ति पदानि दशसंख्यानि तावतीरिष्टका उपदधाति 'चित्तिस्स्रुक्,* तया देवतया' इत्यादिभिर्दशभिर्मन्त्रैः । पदग्रहणं ग्रह-

---

* आ. ३-१.

उपरिष्टात्प्राश्च॰ सप्तहोतारम् । हृदयं यजू॰षि पत्न्यंश्च । यथाऽवकाशं ग्रहान् । यथाऽवकाशं प्रतिग्रहाल्लोकंपृणाश्च । सर्वा ह्यस्यैता देवताः प्रीता अभीष्टा भवन्ति ॥ २६ ॥ सदेवमग्निं चिनुते ।

निवृत्त्यर्थं, वक्ष्यति च—'यथाऽवकाशं ग्रहान्' इति । हृदयमिति दशहोतृहृदयं, एकामिष्टकां 'सुवर्णं घर्मं'[1] इत्यारभ्य 'ब्रह्मेन्द्रम्'[1] इत्यतः प्राक् । यजुषी इति द्वे इष्टके संभारयजुषी 'अग्निर्यजुर्भिः । सविता स्तोमैः'[2] इति । पत्न्यौ च द्वे इष्टके देवपत्न्यौ 'सेनेन्द्रस्य । धेना बृहस्पतेः'[3] इति । दक्षिणत इत्यादि । प्राश्चं प्रागारभ्य प्राग्नीतिकं, एवं सर्वं, यावत्पदमित्यादि समानम् । हृदयादीन्युत्तराणि गृह्यन्ते । उपरिष्टादिति दर्भस्तम्बस्य । हृदयमिति सप्तहोतृहृदयं 'इन्द्रो राजा'[1] इत्यारभ्याऽन्तादनुवाकस्य । यजूंषि शिष्टानि त्रयोदश पत्न्यः शिष्टा आन्तादनुवाकस्य । यथाऽवकाशं अन्तरालानुपधानेषु ग्रहान् 'वाचस्पते विधे नामन्'[4] इत्याद्यान् ग्रहान् 'देवस्य त्वा'[5] इत्याद्यान् 'उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु'[5] इत्यन्तान् 'अग्नये हिरण्यं, सोमाय वासः'[5] इत्याद्यात्मकान् । लोकंपृणा व्याख्याताः[6] । एवं चिन्वानस्य सर्वा देवताः प्रीताः तर्पिताः अभीष्टाः पूजिताश्च भवन्ति । सदेवं देवसहितं देवार्हमेवाग्निं चिनुते य एवं चिन्वानः ॥

[1] आ. ३-११. [2] आ. ३-८. [3] ३-९. [4] आ. ३-१. [5] आ. ३-१०. [6] आ. ३-११-६.

[8]रथसंमितश्चेतव्यः । वज्रो वै रथः । वज्रेणैव पाप्मानं भ्रातृव्यꣳ स्तृणुते । पक्षस्संमितश्चेतव्यः। एतावान् वै रथः । यावत्पक्षः । रथसंमितमेव चिनुते । [9]इममेव लोकं पशुबन्धेनाभिजयति । अथो अग्निष्टोमेन ॥२७॥ अन्तरिक्षमुक्थ्येन । स्वरतिरात्रेण । सर्वान्लोकानहीनेन । अथो सत्रेण। [10]वरो दक्षिणा । वरेणैव वरꣳ स्पृणोति । आत्मा हि वरः । [11]एकविꣳशतिर्दक्षिणा ददाति । एक-

[8]रथसंमित इत्यादि ॥ रथेन संमितः रथप्रमाणः । वज्रो रथः वज्रतृतीयांशत्वात् 'स्फ्यस्तृतीयं रथस्तृतीयं'* इति । स्तृणुते हिनस्ति । पक्षस्संमितः पक्षसा चक्रेण तुल्यप्रमाणः चक्रप्रधानत्वाद्रथस्य । तदतिरेकेण रथो नास्ति, तस्मात्पक्षस्संमितो रथसंमित इति ॥

[9]इममेवेत्यादि ॥ पशुबन्धादिभिरेकैकलोकजयः अहीनेन सत्रेण चानन्तलोकजयः, तस्मात्पशुबन्धादिष्वयं चेतव्यः, येन पशुबन्धादियाजी सर्वान् लोकानभिजयतीति भावः ॥

[10]वर इति ॥ वरिष्ठं द्रव्यं गवादि, तेन वरेण वरं आत्मानमेव स्पृणोति प्रीणयति ॥

[11]एकविंशतिरिति ॥ विभक्तिव्यत्ययः । एकविंश इति । सप्तदशः प्रजापतिः त्रय इमे लोकाः असावादित्य एकविंशः,

* सं. ५-२-६.

विꣳशो वा इतस्स्वर्गो लोकः। प्र स्वर्गं लोकमाप्नोति ॥२८॥ असावादित्य एकविꣳशः। अमुमेवादित्यमाप्नोति। शतं ददाति। शतायुः पुरुषश्शतेन्द्रियः। आयुष्येवेन्द्रिये प्रतितिष्ठति। सहस्रं ददाति। सहस्रसंमितस्स्वर्गो लोकः। स्वर्गस्य लोकस्याभिजित्यै। [12]अन्विष्टकं दक्षिणा ददाति। सर्वाणि वयाꣳसि ॥२९॥ सर्वस्याप्त्यै। सर्वस्यावरुध्यै। [13]यदि न विन्देत। मन्थानेतावतो दद्यादोदनान् वा। अश्नुते तं कामम्। यस्मै कामायाग्निश्चीयते। [14]पष्ठौहीं त्वन्तर्वतीं दद्यात्। सा

---

स एव स्वर्ग इति। न लोकमात्रं, आदित्यमेवाप्नोति। शतमित्यादि। गतम्। सहस्रसंमित इति बहुमूल्य इत्यर्थः॥

[12]अन्विष्टकमिति॥ इष्टकायामिष्टकायां सर्वाणि वयांसि द्रव्याणि। सर्वेण वयसा बाल्येन तारुण्येन वार्धक्येन वा उपलक्षितानि ददाति, तत् सर्वस्य लाभाय वशीकरणाय च भवति॥

[13]यदि न विन्देतेति॥ यदि सर्वाणि वयांसि न लभेत एतावत्संख्यान् मन्थान् द्रवसंयुक्तान् सक्तून् ओदनान्वा दद्यात्। सर्वं कामं प्रेप्सितं अश्नुते॥

[14]पष्ठौहीमिति॥ चतुर्वर्षामन्तर्वतीम्। 'वा छन्दसि नुग्विधिः' इति नुगभावः। अस्या अवश्यं देयत्वाय तुशब्दः। सा

हि सर्वाणि वयाꣳसि । सर्वस्याप्त्यै । सर्वस्यावरुध्यै ॥ ३० ॥ हिरण्यं ददाति । हिरण्यज्योतिरेव स्वर्गं लोकमेति । वासो ददाति । तेनायुः प्रतिरते । वेदितृतीये यजेत । त्रिषत्या हि देवाः । ससत्यमग्निं चिनुते । [15]तदेतत्पशुबन्धे ब्राह्मणं ब्रूयात् । नेतरेषु यज्ञेषु । [16]यो ह वै चतुर्होतॄननुसवनं तर्पयितव्यान् वेद ॥ ३१ ॥ तृप्यति प्रजया पशुभिः । उपैनꣳ सोमपीथो नमति । एते वै चतुर्होतारोऽनुसवनं तर्पयितव्याः । ये ब्राह्मणा बहुविदः । तेभ्यो यद्दक्षिणा न नयेत् । दुरिष्टꣳ

---

हीति । सर्वैर्वयोभिस्तुल्या । गतमन्यत् । प्रतिरते वर्धयति । वेदितृतीय इति वेद्यारम्भांशे । त्रिषत्या इति । त्रित्वेन सत्यत्वं येषां ते तथोक्ताः । सुषामादित्वात् षत्वम् । एवं कुर्वन् ससत्यं सत्यसहितं फलाविसंवादिनं अग्निं चिनुते ॥

[15]तदेतदित्यादि ॥ यदेतत् 'वेदितृतीये यजेत' इत्यन्तं ब्राह्मणं पशुबन्धे ब्रूयात् यदाऽयमग्निः पशुबन्धे क्रियते तदैव । यदा त्वितरेषु यज्ञेषु क्रियते न तदानीं ब्रूयात् ॥

[16]यो ह वा इति ॥ अनुसवनं सवने सवने सोमपीथः सोमपानं एनमुपनमति पुनः पुनस्सोमेन यजते । बहुविदः षड-

स्यात् । अग्निर्मस्य वृञ्जीरन् । तेभ्यो यथाश्रद्धं दद्यात् । स्विष्टमेवैतत्क्रियते । नास्याग्निं वृञ्जते ॥ ३२॥ हिरण्येष्टको भवति । यावदुत्तममङ्गुलिकाण्डं यज्ञपरुषा संमितम् । तेजो हिरण्यम् । यदि हिरण्यं न विन्देत् । शर्करा अक्ता उपदध्यात् । तेजो घृतम् । सतेजसमेवाग्निं चिनुते । [17]अग्निं चित्वा सौत्रामण्या यजेत मैत्रावरुण्या वा । वीर्येण वा एष व्यृद्ध्यते । योऽग्निं चिनुते ॥ ३३ ॥ यावदेव वीर्यम् । तदस्मिन्दधाति । ब्रह्मणस्सायुज्यꣳ सलोकतामाप्नोति । एतासामेव देवतानाꣳ सायुज्यम् । सार्ष्टिताꣳ समानलोकतामाप्नोति । य

ङ्गवेदार्थविदः । वृञ्जीरन् वर्जयेरन् । गतमन्यत् । अङ्गुलिकाण्डं उत्तमं अङ्गुलेरुपरि पर्व यज्ञस्य च पर्व यजमानः । अक्ता इति आज्येन 'तेजो घृतं' इति स्तुतेः ॥

[17]अग्निं चित्वेत्यादि ॥ मैत्रावरुण्याऽऽमिक्षया यजेत । अग्निं चिन्वानो हि वीर्येण वियुज्यते तपसा क्षीणवीर्यो भवति, तत्रान्यतरेण यागेन सर्वं वीर्यमस्मिन् स्थापयति । अथैतमग्निं चिन्वानः एतं एवंमहिमानं विद्वांश्च ब्रह्मणस्सायुज्यं सलोकतां

एतमग्निं चिनुते । य उ चैनमेवं वेद । एतदेव सावित्रे ब्राह्मणम् । अथो नाचिकेते ॥ ३४ ॥

होता चतुर्होतृणाꣳ स्तुतिश्चकार वा भवन्त्यग्निष्टोमेनाप्नोति वयाꣳसि वयाꣳसि सर्वस्याप्त्यै सर्वस्यावरुध्यै वेद वृङ्क्ते चिनुते नव च ॥ ५ ॥

[1]यच्चामृतं यच्च मर्त्यम् । यच्च प्राणिति यच्च न । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे ।

---

चाप्नोति ब्रह्ममयत्वाद्दशहोत्रादीनां 'ब्रह्म वै चतुर्होतारः' इति । तथा एतासां देवतानां दशहोत्रादीनां सायुज्यं समानयोगत्वं सार्ष्टितां समानशरीरत्वं समानलोकतां एकलोकतां चाप्नोति । सावित्रेऽप्यग्नावेतद्ब्राह्मणं यदिदं चातुर्होत्रे उक्तं, अथो अपि च एतदेव नाचिकेतेऽप्यग्नौ ब्राह्मणं विधिरित्यर्थः ॥

इति तृतीये काठके पञ्चमोऽनुवाकः.

[1]अथ वैश्वसृजकाण्डं हव्यवाडार्षेयं—यच्चामृतमित्यादयश्चत्वारोऽनुवाकाः । तत्र सन्ति परिमण्डलास्तिस्रो लेखाः । तस्यां बाह्यायामष्टादशोपदधाति—यच्चामृतमिति ॥ सर्वाः पङ्क्तयो यजुरन्ता अनुष्टुभो वा । यच्च किंचिदिह अमृतं मरणरहितं नित्यं, यच्च किंचिन्मर्त्यं मरणशीलमनित्यं, यच्च किंचित् प्राणिति उच्छ्वसिति, यच्च किंचित् न प्राणिति सर्वं तदिष्टकात्वेन संक-

तेन ऋषिणा तेन ब्रह्मणा। तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद। [2]सर्वास्स्त्रियस्सर्वान्पुꣳसः। सर्वं नस्त्रीपुमं च यत्। सर्वास्ताः। [3]यावन्तः पाꣳसवो भूमेः ॥ ३५ ॥ संख्याता देवमायया। सर्वास्ताः। [4]यावन्त ऊषाः पशूनाम्। पृथिव्यां पुष्टिर् हिताः। सर्वास्ताः। [5]यावतीस्सिकतास्सर्वाः। अफ्स्वन्त-

---

ल्प्यम्। इष्टकापेक्षं स्त्रीत्वं बहुत्वं च इष्टकात्वेन कामदुघाः सर्वाभिमतसिद्धिहेतूनुपदधे। यदा त्वामुपदध इति शेषः। त्वमपि तादृशी तेन ऋषिणा मन्त्रेण, ब्रह्मणा उपधानकर्मणा, तया देवतया सर्वदेवतात्मकेनात्मना अङ्गिरसामिव अस्माकमपि ध्रुवा निश्चला सीद। एतयैवोत्तरा व्याख्याताः। सर्वास्ता इति चोत्तरार्धस्य प्रतीकग्रहणं सर्वत्र समानम् ॥

[2]नस्त्रीपुमं स्त्री पुमांश्च न भवतीति नस्त्रीपुमम्। अन्त्यस्याकारश्छान्दसो नलोपाभावश्च ॥

[3]देवमायया देवप्रज्ञया अन्येषामशक्यत्वात् ॥

[4]पशूनां पुष्टिहेतुत्वेन पृथिव्यां निहिता ऊषाः 'संज्ञानं वा एतत्पशूनाम्'* इति ॥

[5]यावत्यस्सिकतास्सर्वाः स्थले, अप्सु चान्तः ॥

---

*आ. १-२६.

श्च याश्श्रिताः । सर्वास्ताः । [6]यावतीश्शर्करा धृ-
त्यै । अस्यां पृथिव्यामधि ॥ ३६ ॥ सर्वास्ताः ।
[7]यावन्तोश्मानोऽस्यां पृथिव्याम् । प्रतिष्ठासु प्रति-
ष्ठिताः । सर्वास्ताः । [8]यावतीर्वीरुधस्सर्वाः । वि-
ष्ठिताः पृथिवीमनु । सर्वास्ताः । [9]यावतीरोषधी-
स्सर्वाः । विष्ठिताः पृथिवीमनु । सर्वास्ताः ॥ ३७
[10]यावन्तो वनस्पतयः । अस्यां पृथिव्यामधि । स-
र्वास्ताः । [11]यावन्तो ग्राम्याः पशवस्सर्वे । आर-
ण्याश्च ये । सर्वास्ताः । [12]ये द्विपादश्चतुष्पादः ।

[6]यावत्यश्शर्करा अस्यां पृथिव्यां धृत्यै उपरि आसन् 'तां शर्कराभिरदृंहत्'* इति ॥

[7]प्रतिष्ठासु पर्वतेषु प्रतिष्ठिताः ॥

[8—10]विष्ठिताः विविधं स्थिताः वीरुधः लताः गुल्माश्च पृथिवीमनुप्राप्य ॥

[11]सर्वं आरण्याश्च य इति ॥

[12]द्विपादो मनुष्यादयः, चतुष्पादो गवादयः, अपादः पादरहिताः, उदरसर्पिणः उदरेण सर्पणं शीलं येषां ते उरगादयः । 'सुप्यजातौ' इति णिनिः । अपाद इति लोपश्छान्दसः ॥

*तै. ब्रा. १-१-३.

अपादं उदरसर्पिणः । सर्वास्ताः । [13]यावदाञ्जनमुच्यते ॥ ३८ ॥ देवत्रा यच्च मानुषम् । सर्वास्ताः । [14]यावत्कृष्णायसꣳ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । [15]यावल्लोहायसꣳ सर्वम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । [16]सर्वꣳ सीसꣳ सर्वं त्रपु । देवत्रा यच्च मानुषम् ॥ ३९ ॥ सर्वास्ताः । [17]सर्वꣳ हिरण्यꣳ रजतम् । देवत्रा यच्च मानुषम् । सर्वास्ताः । [18]सर्वꣳ सुवर्णꣳ हरितम् । देवत्रा यच्च मानुषम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेन ऋषिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ४० ॥

भूमेरधि विष्ठिताः पृथिवीमनु सर्वास्ता उच्यते मानुषꣳ सीद ॥ ६ ॥

यच्च स्त्रियः पाꣳसव ऊषास्सिकताश्शर्करा

[13—18]देवत्रा देवेषु । 'देवमनुष्य' इति त्राप्रत्ययः । मानुषं मनुष्येषु भवं, यावदाञ्जनं स्नेहद्रव्यम् । कृष्णायसं काललोहं, देवलोके मनुष्यलोके च । 'अनोऽश्मायस्सरसां' इति टच्समासान्तः दासीभारादिर्द्रष्टव्यः । लोहायसं लोहितायसं ताम्रम् । हिरण्यं

अश्मानो वीरुध ओषधीर्वनस्पतयो ग्राम्या ये द्विपादो यावदाञ्जनं यावत्कृष्णायसꣳ लोहायसꣳ सीसꣳ हिरण्यꣳ सुवर्णꣳ हरितमष्टादश ॥

[1]सर्वा दिशो दिक्षु । यच्चान्तर्भूतं प्रतिष्ठितम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघां दधे । तेन ऋषिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । [2]अन्तरिक्षं च केवलम् । यच्चास्मिन्नन्तराहितम् । सर्वास्ताः । [3]आन्तरिक्ष्यश्च याः प्रजाः ॥

---

हितरमणीयं रजतं सुवर्णं काञ्चनं हरितं हरितवर्णमुत्तमम् । इष्टकादेः पुनराम्नानमनुषङ्गविच्छेदसूचनार्थम् ॥

इति तृतीये काठके षष्ठोऽनुवाकः.

---

[1]अभ्यन्तरायां लेखायां पञ्चदशोपदधाति । सर्वा दिश इत्यादि ॥ सर्वा दिशो दिक्षु यच्चेति प्रथमः पादः । सर्वाः दिशः, तासु च सर्वासु दिक्षु यदन्तः मध्ये भूतं उत्पन्नं, यच्च प्रतिष्ठितं लब्धस्थितिकं वस्तु ॥

[2]यच्च केवलं शुद्धं वस्तु, यच्चास्मिन्नाकाशे आहितमन्तः ॥

[3]आन्तरिक्ष्यः अन्तरिक्षे भवाः गन्धर्वाप्सरसः, ये चान्ये विद्याधरादय ॥

४१॥ गन्धर्वाप्सरसंश्च ये । सर्वास्ताः । [4]सर्वानुदारान्थ्सलिलान् । अन्तरिक्षे प्रतिष्ठितान् । सर्वास्ताः । [5]सर्वानुदारान्थ्सलिलान् । स्थावराः प्रोष्याश्च ये । सर्वास्ताः । [6]सर्वां धुनिं सर्वान्ध्वंसान् । हिमो यच्च शीयते ॥४२॥ सर्वास्ताः । [7]सर्वान्मरीचीन् विततान् । नीहारो यच्च शीयते ।

---

[4]उदारान् एकदिन एव जलवर्षणशीलान् सलिलान् सलिलवतो मेघान् । मत्वर्थीयो लुप्यते । अन्तरिक्ष एव प्रतिष्ठितान् नान्यत्र ॥

[5]अथ अन्यान् उदारान् वर्षणशीलान् सलिलान् सहलयः सलिः तद्वतः परस्परनिलीनदेहान् । सिध्मादित्वाल्लच् छान्दसं ह्रस्वत्वं, चित्त्वादन्तोदात्तत्वम् । स्थावराः स्थानशीलाः, प्रोष्याः प्रवासशीलाः । छान्दसः कर्तरि ण्यत् प्रसारणं च ॥

[6]सर्वां धुनिं नदीः, सर्वान् ध्वंसान् कम्पयितॄन् । ध्वंसतेः पचाद्यच् । वाय्वादय उच्यन्ते । यद्वा—ध्वंसाः नद्या गतिप्रकाराः । हिमात्मना यज्जलं शीयते पतति ॥

[7]मरीचीन् रश्मीन् विततान् विस्तारितान् जलादिवर्षणाय सूर्येण प्रेरितान्, येभ्यश्च नीहारश्शीयते पतति । 'सुपां सुलुक्' इति पञ्चम्या लुक् ॥

सर्वास्ताः । [8]सर्वा विद्युतस्सर्वान्थ्स्तनयित्नून् । ह्रादुनीर्यच्च शीयते । सर्वास्ताः । [9]सर्वास्स्रवन्तीस्सरितः । सर्वमफ्सुचरं च यत् । सर्वास्ताः ॥ ४३ ॥
[10]याश्च कूप्या याश्च नाद्यास्समुद्रियाः । याश्च वैशन्तीरुत प्रासचीर्याः । सर्वास्ताः । [11]ये चोत्तिष्ठन्ति जीमूताः । याश्च वर्षन्ति वृष्टयः । सर्वास्ताः ।
[12]तपस्तेजं आकाशम् । यच्चाकाशे प्रतिष्ठितम् ।

---

[8]सर्वा विद्युत इति त्रिष्टुप् ॥ ह्रादुनीः अशनिशब्दः । इनिप्रत्ययस्य छान्दसं दीर्घत्वम् । येभ्यः स्तनयित्नुभ्यः ह्रादुनीः अशनिः पतति ॥

[9]स्रवन्त्यो नद्यः पृथिवीस्थिताः । अन्तारिक्षनद्यः प्रागुक्ताः ॥

[10]याश्च कूप्या इति जगती ॥ कूपे भवाः आपः । 'भवे छन्दसि' इति यत् । नाद्याः 'पाथोनदीभ्यां ड्यण्' समुद्रियाः 'समुद्राभ्राद्धः' वैशन्त्यः उत्सभवाः 'वेशन्तहिमवद्भ्यामण्' प्रासच्यः प्रासमञ्चन्त्यः आवर्तभवाः ॥

[11]ये मेघा उत्तिष्ठन्ति उपरतवृष्टयः पलायन्ते, ये च वृष्टिशीला वर्षन्ति । यद्वा—याः वृष्टयः पृथिवीं सिञ्चन्ति ॥

[12]तपः आतपः, तदीयः प्रकाशः तेजः, तस्यावकाश आकाशम्, तस्मिन्नप्याकाशे यत्प्रतिष्ठितम् ॥

सर्वास्ताः । [13]वायुं वयाꣳसि सर्वाणि ॥ ४४॥ अन्तरिक्षचरं च यत् । सर्वास्ताः । [14]अग्निꣳ सूर्यं चन्द्रम् । मित्रं वरुणं भगम् । सर्वास्ताः । [15]सत्यꣳ श्रद्धां तपो दमम् । नाम रूपं च भूतानाम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघा दधे । तेन ऋषिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद ॥ ४५॥

प्रजा हिमो यच्च शीयते सर्वास्तास्सर्वाणि ब्रह्मणैकं च ॥ ७॥

दिशोऽन्तरिक्षमान्तरिक्ष्यं उदारानुदारान्धुनिं मरीचीन् विद्युतस्स्रवन्तीर्याश्च ये च तपो वायुमग्निꣳ सत्यं पञ्चदश ॥

[1]सर्वां दिवꣳ सर्वान्देवान्दिवि । यच्चान्तर्भूतं प्र-

[13–15]वयांसि पक्षिणः यदन्यदन्तरिक्षचरं, नाम संज्ञा, रूपं रूपणीयं इदं तदिति विकल्पनीयम् ॥

इति तृतीये काठके सप्तमोऽनुवाकः.

[1]अभ्यन्तरायां लेखायां नवोपदधाति—सर्वां दिवमिति ॥ प्रथमा त्रिष्टुप् ॥

तिष्ठितम् । सर्वास्ता इष्टकाः कृत्वा । उप कामदुघां दधे । तेन ऋषिणा तेन ब्रह्मणा । तया देवतयाऽङ्गिरस्वद्ध्रुवा सीद । [2]यावतीस्तारकास्सर्वाः । वितता रोचने दिवि । सर्वास्ताः । [3]ऋचो यजूꣳषि सामानि ॥ ४६ ॥ अथर्वाङ्गिरसश्च ये । सर्वास्ताः । [4]इतिहासपुराणं च । सर्पदेवजनाश्च ये । सर्वास्ताः । [5]ये च लोका ये चालोकाः । अन्तर्भूतं प्रतिष्ठितम् । सर्वास्ताः । [6]यच्च ब्रह्म यच्चाब्रह्म । अन्तर्ब्रह्मन्प्रतिष्ठितम् ॥ ४७ ॥ सर्वास्ताः । [7]अहोरात्राणि सर्वाणि । अर्धमासाꣳश्च केवलान् । स-

---

[2]रोचने रोचनशीले बिम्बे, दिवि आकाशे, तारकाः अश्विन्यादयो देव्यः ॥

[3]अथर्वाङ्गिरसः अथर्ववेदः, तैर्दृष्टत्वात् ॥

[4]इतिहासपुराणानि च सर्पाणां देवजनानां यक्षादीनां च प्रतिपादकाः ग्रन्थाः ॥

[5]लोकाः प्रकाशवन्ति स्थानानि, अलोकाः अप्रकाशाः पातालादयः । यच्चान्यदन्तर्भूतं पृथिव्यादिषु भूतेषु प्रतिष्ठितम् ॥

[6–8]यच्च ब्रह्म वेदवित् ब्राह्मणादि, यच्चाब्रह्म शूद्रादि, प्रतिलोमान्तं ब्रह्मण्येव प्रतिष्ठितं, सर्वमूलत्वात्त्रैवर्णिकानाम् । यद्वा—

वा॒स्ताः । [8]सर्वा॑नृ॒तूँथ्सर्वा॒न्मा॒सान् । सं॒व॒थ्स॒रं च॒ केव॑लम् । सर्वा॒स्ताः । [9]सर्वं॑ भू॒तꣳ सर्वं॒ भव्य॑म् । यच्चा॒तोऽधि॑ भवि॒ष्यति॑ । सर्वा॒स्ता इष्ट॑काः कृ॒त्वा । उप॑ का॒म॒दुघा॑ दधे । तेन॒ ऋषि॑णा तेन॒ ब्रह्म॑णा । तया॑ दे॒वत॑याऽङ्गिर॒स्वद्ध्रु॒वा सी॑द ॥ ४८ ॥

सामा॑नि ब्र॒ह्मन्प्रति॑ष्ठितं कृ॒त्वा त्रीणि॑ च ॥८॥

दिवं॒ तार॑का॒ ऋचं॑ इतिहा॒सपु॒रा॒णं च॒ ये च॒ यच्चा॒होरा॒त्राण्यृ॒तून्भू॒तं नवं॑ ॥

[1]ऋ॒चां प्राचीं॒ मह॒ती दिगु॑च्यते । दक्षि॒णामा-

ब्रह्म वेदः, अब्रह्म बौद्धाद्यागमः, अन्तर्ब्रह्मन् प्रतिष्ठितं स्मृत्यादि तन्मूलत्वात् । केचिदाहुः—यद्ब्रह्मपरं, यच्च परस्मिन् ब्रह्मणि प्रतिष्ठितं अब्रह्म तस्यैव परिणामः प्रपञ्चः ॥

[9]भूतं अतीतं, भव्यं भवत, यच्चात ऊर्ध्वं भविष्यति । 'भव्य-गेय' इति निपात्यते ॥

इति तृतीये काठके अष्टमोऽनुवाकः.

---

[1]ब्रह्मा सदस्यासीनो वैश्वसृजान् व्याचष्टे—'ऋचां प्राची' इत्यादीन् ॥ व्याख्यातरूपाश्श्लोका एते वेदमाहात्म्यपराः, प्रयोजनं तत्सामान्याद्वैश्वसृजस्यानुष्ठेयता । तत्र प्रथमे जगत्यौ ।

हुर्यजुषामपाराम् । अथर्वणामङ्गिरसां प्रतीचीं ।
साम्नामुदीची महती दिगुच्यते । [2]ऋग्भिः पूर्वाह्णे
दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः ।
सामवेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति
सूर्यः । [3]ऋग्भ्यो जाताꣳ सर्वशो मूर्तिमाहुः । सर्वा
गतिर्याजुषी हैव शश्वत् ॥ ४१ ॥ सर्वं तेजस्साम-

---

प्राची दिक् महती महनीया उदयाधारत्वात् । सा ऋचां स्वभूता वेदविद्भिरुच्यते, ऋग्भिरुत्तेजितबलेत्यर्थः । दक्षिणां दिशं यजुषां स्वभूतामाहुस्सन्तः अपारां समाप्तिरहिताम् । अथर्ववेदस्य स्वभूता प्रतीचीत्युच्यते । साम्नामुदीची स्वभूता, तस्याः महत्त्वं सामसंबन्धात्, सामर्थ्याच्च । ऋगादीनामपि प्राच्यादिसंबन्धेन वीर्यातिशयो भवतीति वेदितव्यम् ॥

[2]ऋग्भिरिति ॥ दिवि आकाशे देवः दीप्तिमान् सविता ईयते गच्छति ऋग्भिरुत्तेजितबलः । 'ईङ् गतौ' दैवादिकः । अह्नो मध्ये यजुर्वेदे देवस्तिष्ठति तदधीनबलो भवति । अस्तमये सामवेदेनोत्तेजितबलो महीयते पूज्यते । यत एवमतस्त्रिभिर्वेदैरशून्य उत्तेजितसामर्थ्य एति गच्छति वर्तते सूर्यः सावकः प्रेरको वा सर्वस्य जन्तोः ॥

[3]ऋग्भ्य इति ॥ द्वे त्रिष्टुभौ । सर्वशः सर्वामपि मूर्तिम् । याजुषी यजुर्भिर्निर्वृत्ता । शश्वत् सर्वदा । सामरूप्यं साम-

रूप्यꣳ ह शश्वत् । सर्वꣳ हेदं ब्रह्मणा हैव सृष्टम् । [4]ऋग्भ्यो जातं वैश्यं वर्णमाहुः । यजुर्वेदं क्षत्त्रियस्याहुर्योनिम् । सामवेदो ब्राह्मणानां प्रसूतिः । पूर्वे पूर्वेभ्यो वच एतदूचुः । [5]आदर्शमग्निं चिन्वानाः । पूर्वे विश्वसृजोऽमृताः । शतं वर्षसहस्राणि । दी-

---

रूपे भवम् । अतः सर्वमिदं द्रव्यक्रियागुणात्मकं जगत् ब्रह्मणा वेदेनैव सृष्टं, सामान्यस्य पारतन्त्र्याद्गुणत्वमिति ॥

[4]ऋग्भ्यो जातमिति ॥ त्रिभ्यो वेदेभ्यः त्रयो वर्णा जाताः, तन्मूलाश्चान्ये सर्वे । अथात्र किं प्रमाणं वेदत्रयप्रभवं सर्वमिति? तत्राह—पूर्वे ऋषय एतद्वचनमुक्तवन्त इति । त्रयीभवं सर्वमिति । तेषां तर्हि किं प्रमाणं? इत्याह—पूर्वेभ्यो महर्षिभ्यः श्रुत्वा । यद्वा—एवं वेदेभ्यस्सर्वं जातमित्युक्तम्, इदानीं वेदानां सर्वार्थेषु प्रामाण्यं दर्शयति—इतः पूर्वेभ्यः अतीतेभ्यस्तादृग्भ्य एतदेव वचः प्रमाणत्वेन ऊचुः इत्थं श्रूयत इति, न तु पुरुषवाक्यं दर्शयन्तो दृष्टा इति । तस्मात् सर्वतः प्रमाणं वेदा इति ॥

[5]इदानीं तस्यैव स्थेम्ने विश्वसृजां सत्रासनमुदाहरति—आदर्शमित्यादयोऽनुष्टुभः । आदर्शे परिमण्डलाकारं वैश्वसृजं अग्निं चिन्वानाः । एतेनावश्यकर्तव्यतामग्नेर्दर्शयति । अमृताः अमरणधर्माणः कर्ममाहात्म्यात् शतं बहुसंख्याः, शतमेव वा विश्वसृजो नाम विश्वस्य जगतस्स्रष्टारः पूर्वे प्रथमजाताः दीक्षिता-

क्षितास्स॒त्त्रमा॑सत ॥५०॥ [6]तप॑ आसीद्गृ॒हप॑तिः । ब्रह्म॑ ब्र॒ह्माभ॑वथ्स्व॒यम् । स॒त्यꣳ ह॒ होतै॑षामासीत् । यद्वि॑श्व॒सृज॒ आस॑त । [7]अ॒मृत॑मेभ्य॒ उद॑गायत् । स॒हस्रं॑ परिवथ्स॒रान् । भू॒तꣳ ह॑ प्रस्तो॒तैषा॑मासीत् । भ॒वि॒ष्यत्प्रति॑ चाहरत् । [8]प्रा॒णो अ॑ध्व॒र्युर॑भवत् । इ॒दꣳ

स्सन्तः सत्रमासत सहस्रसंख्यानि वर्षाणि वर्षसहस्राणि । यद्वा—आदर्शे वैश्वसृजमग्निं चिन्वानाः पूर्वे विश्वसृजोऽमृता बभूवुः । कदा? इत्याह—यदा दीक्षिताः वर्षसहस्रं सत्रमासत तदा अमृता अभवन् ॥

[6]इदानीं सत्रमेव वर्णयति—तप आसीदिति ॥ परमात्मसंबन्धि तप एव गृहपतिः मुख्यो यजमानोऽभवत्, तन्मूलत्वात्सर्वस्य, ब्रह्म परमात्मैव स्वयं ब्रह्म बभूव, सर्वासामनुज्ञातृत्वात् । एषां विश्वसृजां सत्यमेव होताऽभवत्, सत्यप्रधानत्वाद्धोतुः, यथा—'सत्यं प्रपद्ये'* इति । यदा विश्वसृजस्सत्रमासत ॥

[7]अमृतामिति ॥ अमृतत्वमुदगायत्, उद्गातृपदव्यामवर्तत, अमृतीभूतानां गानप्रियत्वात् । परिवत्सरान् संवत्सरान्, अत्यन्तसंयोगे द्वितीया । भूतं भूतकालः प्रस्तोताऽभवत्, उद्गानात्पूर्वभावित्वात्प्रस्तावस्य । भविष्यत् भविष्यत्कालश्च प्रत्याहरत् प्रतिहर्तृकृत्यमकरोत्, उद्गानादूर्ध्वभावित्वात्प्रतिहारस्य ॥

[8]प्राणः अध्वर्युः बभूव, सर्वदा व्याप्तृतत्वात् । इदं सर्वं सिषासतां संभक्तिं व्यक्तीकर्तुमिच्छतां सत्रे सति । 'जनसनखनाम्'

* आ. ३-५-१.

सर्वꣳ सिषासताम् ॥५१॥ अपानो विद्वानावृतः । प्रति प्रातिष्ठदध्वरे । [9]आर्तवा उपगातारः । सदस्या ऋतवोऽभवन् । अर्धमासाश्च मासाश्च । चमसाध्वर्यवोऽभवन् । [10]अशꣳसद्ब्रह्मणस्तेजः । अच्छावाकोऽभवद्यशः । ऋतमेषां प्रशास्ताऽऽसीत् । यद्विश्वसृज आसत ॥५२॥ [11]ऊर्ग्राजानमुदवहत् ।

इत्यात्वम् । अथ तस्मिन्नध्वरे अपानः प्रतिप्रातिष्ठत् प्रतिप्रस्थातृत्वेनावर्तत, अध्वर्युप्रतिरूपवृत्तित्वात्तस्य आवृतः स्वव्यापारान् विद्वान् ॥

[9]आर्तवाः ऋतुधर्माः उपगातारोऽभवन्, गुणभूतत्वात् । ऋतवः सदस्या अभवन्, द्रष्टृत्वात्सर्वार्थानाम् । अर्धमासाश्च मासाश्च चमसाध्वर्यवोऽभवन् संघातवृत्तित्वात् ॥

[10]तेज एव ब्रह्मणोऽशंसत् ब्राह्मणाच्छंसित्वेऽतिष्ठत्, प्रकाशकत्वात् । ब्रह्म ब्राह्मणं तत आदाय शंसतीति 'ब्राह्मणाच्छंसिन उपसंख्यानम्' इति पञ्चम्या अलुक् । यश एव अच्छावाकोऽभवत्, यशस्विनामभिमुखवादित्वात् । यदा विश्वसृजः सत्रमासत, तदा एषां ऋतमेव प्रशास्ता मैत्रावरुण आसीत् प्रशास्तृभावं प्रापद्यत, ऋतप्रियत्वान्मित्रावरुणयोः ॥

[11]ऊर्क् बलं राजानं सोममुदवहत् सोमविक्रय्यभवत्, बलवदधिकारात् । सहः पराभवसामर्थ्यं तदेव ध्रुवगोपोऽभवत्

ध्रुवगोपस्सहोऽभवत् । ओजोऽभ्यष्टौद्ग्रावृण्णः । यद्विश्वसृज आसत । [12]अपचितिः पोत्रीयामयजत् । नेष्ट्रीयामयजत्त्विषिः । आग्नींध्राद्विदुषी सत्यम् । श्रद्धा हैवायजथ्स्वयम् । [13]इरा पत्नी विश्वसृजाम् । आकूतिरपिनद्धविः ॥ ५३ ॥ इध्मश्ह क्षुच्चैभ्य उग्रे ।

ध्रुवस्य गोप्ताऽभवत्, सहस्वान् हि गोपायति । ओजः प्रकाशः, तदेव ग्राव्णोऽभ्यष्टौत् ग्रावस्तुदभवत्, प्रकाशहेतुत्वात् स्तोत्रस्य । यद्विश्वसृज आसत । गतम् ॥

[12]अपचितिः पूजा सैव पोत्रीयां पोतृसंबन्धिनीमिज्यां अयजत्, पूतत्वात्तद्विदः । गहादित्वाच्छः । त्विषिः कान्तिः दीप्तिरेव नेष्ट्रीयां नेष्टृसंबन्धिनीमिज्यां अयजत्, दीप्तिमत्त्वात्तद्विदः । यद्वा—उभयत्रापि भावे 'होत्राभ्यः' इति छः । ततस्तद्वतीं याज्यामकरोदिति मत्वर्थीयोऽकारः । श्रद्धैव स्वयमाग्नीध्रादयजत् आग्नीध्रस्य यागमकरोत् आग्नीध्रचोऽभवदिति यावत्, श्रद्धातिशयसाध्यत्वात्तस्य । यद्वा—प्रथमायाः 'सुपां सुलुक्' इत्यादादेशः । आग्नीध्रात् आग्नीध्र इत्यर्थः । सत्यं विदुषी आग्नीध्रयजनयाथातथ्यज्ञा ॥

[13]इरा वृष्टिरेव विश्वसृजां पत्नी बभूव पत्नीपदव्यामभवत्, तन्मूलत्वात्सर्वप्रवृत्तेः । आकूतिस्संकल्पः, सा हविरपिनद् पिनष्टिस्म आरम्भसाम्यात् । क्षुच्च तृष्णा चेत्युभे उग्रे छेदनकुशले एभ्यः इध्ममावहतां आहरताम् ॥

तृष्णा चावहतामुभे । [14]वागेषाꣳ सुब्रह्मण्याऽऽसीत् । छन्दोयोगान् विजानती । कल्पतन्त्राणि तन्वानाऽहः । सꣳस्थाश्च सर्वशः । [15]अहोरात्रे पशुपाल्यौ । मुहूर्ताः प्रेष्या अभवन् । मृत्युस्तदभवद्धाता । शमितोग्रो विशां पतिः ॥५४॥ [16]वि-

---

[14]वागेव सरस्वत्येव एषां सुब्रह्मण्याऽभवत् सुब्रह्मण्यपदव्यामभवत् । वागपेक्षं स्त्रीत्वम् । यद्वा—'सुपां सुलुक्' इत्याकारः । सुब्रह्मण्या सुब्रह्मण्यम् । वाचं विशिनष्टि—छन्दोयोगान् छन्दसां गायत्र्यादीनां युक्तिं गुरुलघ्वादिविचित्रान् वृत्तिप्रकारान् विशेषेण जानती, कल्पतन्त्राणि, कल्पाः कल्पसूत्राणि, तन्त्राणि व्याकरणादीन्यङ्गशास्त्राणि छन्दोविचितिव्यतिरिक्तानि तन्वाना कर्मानुरूप्येण विस्तारयन्ती, अहस्संस्थाः अह्नां संस्थाश्च साह्नाहीनसत्रात्मिकाः सर्वशः कात्स्न्र्येन प्रकृतिविकृतिक्रमेण विस्तारयन्ती, ईदृशी वागेव सुब्रह्मण्याऽऽसीत् ॥

[15]अहश्च रात्रिश्च पशून् सवनीयादीन् अपालयतां तत्र नियुक्ते अभूताम् । मुहूर्ता एव प्रेष्याः कर्मकरा अभवन्, कर्मनिर्वृत्तिहेतुत्वात्तेषाम् । 'प्रादूहोढोढ्येषैष्येषु' इति वृद्धिः व्यत्ययेन न प्रवर्तते । मृत्युश्शमिताऽभवत् । धाता कर्मानुरूप्येण व्यवस्थापयिता । विशां प्राणिनां पतिः नियन्तृत्वेन स्वामी ॥

[16]विश्वसृज इत्याद्यास्त्रिष्टुभः ॥ एवं विश्वसृजः प्रथमाः स्थूलप्रपञ्चोत्पत्तेः प्रागेवाद्यधर्मत्वेन विद्यमानाः स्थूलप्रपञ्चसृष्ट्यर्थं

श्वसृजः प्रथमास्सत्त्रमासत । सहस्रंसमं प्रसुतेन यन्तः । ततो ह जज्ञे भुवनस्य गोपाः । हिरण्मयश्शकुनिर्ब्रह्मनाम । [17]येन सूर्यस्तपति तेजसेद्धः । पिता पुत्रेण पितृमान् योनियोनौ । नावेदविन्म-

सहस्रसमं सहस्रसंवत्सरं सत्रमासत । के पुनस्ते? 'तप आसीद्गृहपतिः' इत्यादिनाऽनुक्रान्तास्तपःप्रभृतय एव । प्रसुतेन सोमेन यन्तः सत्रं नयन्तः सहस्रसंवत्सरानासत । ततः कर्मणो बलात् ब्रह्मनाम ब्रह्माख्यं परमात्मसंज्ञं यत्तदनुक्रान्तानां तपःप्रभृतीनामाश्रयभूतं जज्ञे प्रादुर्बभूव व्यक्तिं जगाम । कथं? भुवनस्य गोपाः गोपायिता उत्पादकः, हिरण्मयः हितरमणीयस्वरूपः, हिरण्यवर्णो वा । शकुनिः शक्तः प्रपञ्चोत्पादने। प्रजापतिः योनिस्थानीयाद्ब्रह्मणः पुत्रस्थानीयः प्रादुर्बभूव । यद्वा—शकुनित्वादिलक्षणं तदेव ब्रह्म प्रपञ्चरूपेण व्यक्तिं गतं, योनिस्थानीयात्तस्मात्पुत्रस्थानीयं विश्वं जज्ञे ॥

[17]तदेव ब्रह्म वर्णयति—येन महातेजसा इद्धः संदीप्तबलः सूर्यः तपति तेजस्वी भवति । योनेराकाशादेरपि योनौ तस्मिन् स्थितं वर्धते । कथम्? पिता पुत्रेण तद्वान् भवति, तथा पुत्रश्च पितृमान् भवति । एवं कार्यकारणक्रमेण तदनुगृहीतं विश्वं विजृम्भते । तं महानुभावं बृहन्तं महान्तं देवं अवेदवित् अवेदार्थज्ञो न मनुते न जानाति । संपराये मरणकाले संसारे वा, सर्वानुभुं सर्वत्रानुभवरूपेण वर्तमानं, सर्वस्य वा

नुते तं बृहन्तम् । सर्वानुभुमात्मानꣳ संपराये । [18]एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् ॥ ५५ ॥ तस्यैवात्मा पदवित्तं विदित्वा । न कर्मणा लिप्यते पापकेन । [19]पञ्चपञ्चाशतस्त्रिवृतस्संवथ्सराः । पञ्चपञ्चाशतः पञ्चदशाः । पञ्चपञ्चाशतस्सप्तदशाः । पञ्चपञ्चाशत एकविꣳशाः ।

---

अनुभवितारं तद्रूपादित्वात् सुप्रत्ययः । आत्मानं परमात्मानम् । इयमविदुषो निन्दा ॥

[18]अथ विदुषः प्रशंसा—ब्राह्मणस्य वेदार्थज्ञस्य, ब्रह्म वेत्तीत्यण् । वेदार्थविदः एष महिमा माहात्म्यं नित्यः अविकृतः । न ह्ययं कर्मणा पुण्येन ज्योतिष्टोमादिना वर्धते न च कर्मणा पापकेन ब्रह्महत्यादिना कनीयान् भवति न ह्रसति । किंचायं वेदार्थज्ञः तस्यैव ब्रह्मणः आत्मा भवति तेनैक्यं प्रतिपद्यते । कदा? तं विदित्वा याथातथ्येन तं वेदादवगम्य । किं तमेव केवलं? नेत्याह— पदवित् तस्य यत्पदं विषयः तदपि तेन नित्याविनाभूतं परमपि ब्रह्म विदित्वा। पापकेन कर्मणा न लिप्यते बन्धनेन कर्मणा पुण्यपापात्मकेन न स्पृश्यते मुच्यत इत्यर्थः ॥

[19]अथ विश्वसृजामयनस्याहःक्लृप्तिं दर्शयति । पञ्चेति ॥ अतः परं ब्राह्मणम् । पञ्चाशदधिकशतद्वयसंख्यास्संवत्सरास्ताव-

विश्वसृजाꣳ सहस्रसंवथ्सरम् । एतेन वै विश्वसृज इदं विश्वमसृजन्त । यद्विश्वमसृजन्त । तस्माद्विश्वसृजः । [20]विश्वमेनाननु प्रजायते । ब्रह्मणस्सायुज्यꣳ सलोकतां यन्ति । एतासामेव देवतानाꣳ सायुज्यम् । सार्ष्टिताꣳ समानलोकतां यन्ति । य एतदुपयन्ति । ये चैनत्प्राहुः । येभ्यश्चैनत्प्राहुः । ओम् ॥ ५६ ॥

त्संवत्सरसंबन्धिनो दिवसाः त्रिवृतः त्रिवृत्स्तोमका भवन्ति । तावद्भिः पञ्चदशाः, तावन्तस्सप्तदशाः, तावन्त एकविंशाः । तस्माद्विश्वसृजामयनमेतत् सहस्रसंवत्सरं भवति । एतेन वा इत्यादि । गतम् ॥

[20]विश्वमेनानित्यादि कर्तॄणां प्रवक्तॄणां श्रोतॄणां च फलस्तुतिः ॥ एनाननु एनान् हेतून् कृत्वा विश्वं प्रजायते उत्पद्यते, ब्रह्मणश्च सायुज्यं सलोकतां च एते यन्ति गच्छन्ति तथा एतासामेव देवतानां विश्वसृजां सायुज्यं सार्ष्टितां समानलोकतां च गच्छन्ति के? ये एतत्सत्रमुपयन्ति, ये चैनत्प्राहुः एतन्माहात्म्यं कीर्तयन्ति, येभ्यश्च श्रोतृभ्यः श्रद्धानेभ्यः एतन्माहात्म्यं प्राहुः,, ते सर्वेऽपि तुल्यफलभाजो भवन्ति । किं सत्यमेतदित्यसंभावयन्तं प्रति पुनरवगच्छति ओं

शर्श्वदासत् सिषांसतामासत ह॒विष्पति॑ः कनी॑-
यान्तस्माद्विश्व॒सृजो॒ऽष्टौ च॑ ॥ १ ॥

तुभ्य॑ दे॒वेभ्य॒स्तप॑सा दे॒वेभ्यो॒ ब्रह्म॒ वै चतु॑रहो॒-
तार॒ो यज्ञामृत॒ꣳ सर्वा॒ दिशो॑ दि॒क्षु सर्वा॑ दिव॑मृचां
प्राची॒ नव॑ ॥ १ ॥

तुभ्य॑ं तप॑सा॒ ता वा ए॒ताः पञ्च॒ हिर॑ण्यं ददाति॒
सर्वा॒ दिश॒स्तप॑ आसीद्गृहप॑ति॒ष्षट्त्रि॒ꣳशत् ॥ ५६ ॥
तुभ्य॒मोम् ॥ हरि॑ः ओम्. तथ्सत्

इति । एतत्सर्वं सत्यमित्यर्थः । मन्त्रोऽयम्, ऋक् एकेषाम् । सर्वथा सर्वार्थसिद्धिः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
तृतीये काठके नवमोऽनुवाकः.

समाप्तस्तृतीयः प्रपाठकः.

एष निष्पावके शाके कुशिकान्वयजन्मना ।
भट्टभास्करमिश्रेण ज्ञानयज्ञः प्रवर्तितः ॥

ओम् तत्सत्.